॥ श्रीः ॥ 15104

श्री वेङ्कटरायसूरिकृतयः १

# श्रीहरिवंशचम्पूः



मैसूरुमहाराजास्थान धर्माधिकारि
पण्डितरत्नं रायपाल्य राघवेन्द्राचार्येण संशोधिता

वि. वेङ्कोबराव् बि. ए.,
(डेप्युटीकमीषनर्, बेंगळूरु)
महाशयेन प्राकाश्यमनायि।



मैसूरु
श्री जयालययन्त्रे मुद्रिता
१९२३.

॥ श्रीः ॥

श्री वेङ्कटरायसूरिकृतयः १०

# श्रीहरिवंशचम्पूः



मैसूरुमहाराजास्थान धर्माधिकारि
पण्डितरत्नं रायपाल्य राघवेन्द्राचार्येण संशोधिता,

वि. वेङ्कोबराव् बि. ए.,
( डेप्युटीकमीषनर्, बेंगळूरु )
महाशयेन प्राकाश्यमनायि ।

मैसूरु
श्री जयालययन्त्रे मुद्रिता
१९२३.

११९८६

# ॥ अवतरणिका ॥

श्रीमत्समस्तजगदुत्पत्तिस्थितिलयकारणस्य भगवतो नारायण नाभिकमलादुद्भूतस्य भगवतैव स्वस्मिन् विनिवेशितानन्तरभाविसकलसर्जनाधिकारस्य चतुर्मुखब्रह्मणः पुत्रेषु स्वजनकचिकीर्षितसृष्टिकर्मणि सहायतया स्वयमपि ब्रह्मशब्देन विश्रुतेषु मरीच्यादिषु श्रीमतो भरद्वाजमहर्षेः ब्राह्मणसन्ततिः बहुविस्तृता वरीवर्ति । तत्र लब्धजन्मसु बहुषु महत्तमेषु श्रीमान् दासोपन्तनामा महाशयः क्रैस्तवाष्टादशशताब्द्याः अन्तिमे तदुत्तरशताब्द्या आदिमे च भागे श्रीमन्मैसूरुमहाराजपरिपालितदेशान्तर्गतस्य नन्दीक्षेत्रस्याभ्यर्णे देवनहळ्ळिप्रभृतिस्थलेषु लौकिकाधिकारमहिम्ना महतीं कीर्तिमुपागतो व्यराजतेति देवनहळ्ळीप्रदेशान्तर्गतहुणसेमारनहळ्ळीमठेऽद्यापि समुपलभ्यमानात् क्रैस्तवसप्तदशोत्तरैकोनविंशशताब्द्यां श्रीमन्महाराजश्रीकृष्णराजप्रभुसार्वभौमेण श्रीमन्तं दासोपन्तं प्रति प्रहितात् लेखादवसीयते ॥

तस्य ज्येष्ठतनूजः श्रीमान् वेङ्कप्पशर्मा बेतमङ्गलप्रदेशे लब्धमुख्याधिकारश्चिरमवर्ततेति सुप्रसिद्धम् । तस्य जीवितं बहुविधश्लाघनीयचरित्रैः बहुभिः स्तूयमानमभूदिति अधोलिखितात् तमुद्दिश्य केनचिद्विदुषा विरचितात् चरमश्लोकादवसीयते । सचः—

**" भारद्वाजकुलं शशीव जलधिं संवर्धयन् योऽभवत्**
**सोऽयं पुत्रचतुष्टये निजगुणान्निक्षिप्य रामैकधीः ।**
**चैत्रे मासि पराभवाख्यशरदः कृष्णे चतुर्थी दिने**
**प्रायाद्दासकुमारवेङ्कटसुधीरम्भोजयोनेर्गृहम् " इति ।**

तत्तादृशात् श्रीमद्वेङ्कप्पमहाशयात् श्रीमत्यां शेषाम्बिकायां लब्धजन्मसु चतुर्षु तनयेषु ज्येष्ठः श्रीमान् वेङ्कटरायसूरिशर्माद्यात्र पुस्तकान्तरे च स...

श्च प्रकाश्यमानानां प्रबन्धरत्नानां प्रणेतेति वक्तुमुत्कण्ठते मे मनः । सोऽयं कविः मैसूरुमण्डले स्वीयां बाल्यदशां समाप्य श्रीमतः वेङ्कटाचलाधिपतेः निकटतरवर्तिनि प्रदेशे वस्तुकामः श्रीमत्या क्षीरसरिता परिपावितं वेदवेदाङ्गविद्भिः नैकशास्त्रपारदृश्वभिः ब्राह्मणप्रवरैः परिशोभितं, आर्काडिति प्राक्तनाम्ना सुप्रसिद्धं षडरण्यक्षेत्रं स्वस्यावासभूमिमकरोत् । तदेतदभिहितं तेनैव श्रीनिवासयात्रानक्षत्रमालायाम्:—

"जन्म मे पश्चिमे देशे नन्दिक्षेत्रसमीपतः ।
वासोऽद्य दक्षिणे देशे रम्ये दुग्धधुनीतटे" इति ॥

अस्य कवेः नन्दीक्षेत्रपरिसरवासभूमिः कलवरनामको ग्रामः । तदन्तिकवर्तिनि पापघ्नीमूलसङ्गते जडल् तिम्मनहळ्ळिनामके ग्रामे तदेतत्कवेः जनकः श्रीमान् वेङ्कप्पशर्मा चिरमुवासेति श्रूयते । तत्रैव सोऽयं लौकिकाधिकारे वर्तमानोऽपि वैदिकजनसमुचितसुगुणगणभाजनतया वैदिकमर्यादापात्रमयमिति बुद्ध्या तादात्विकसुप्रसिद्धश्रीमन्मैसूरुमहाराजमुख्यसचिववर्येभ्यः श्रीमद्भ्यः पूर्णय्यमहाशयेभ्यः नैकाः वृत्तीः बहुमानतयाऽलब्धेति जनश्रुतिः प्रतायते ॥

षडरण्यक्षेत्रवर्तिषु नैकेषु विद्वत्सु सुविदितात् श्रीमन्मध्वरायाचार्यशिष्यात् श्रीमतो वेङ्कोबाचार्यनाम्नो विद्वद्वरात् समुपात्तसाहित्यप्रभृतिविद्याविभवः सोऽयं कविः स्वस्य पूर्वे वयसि समवृत्तमालां नौकाचरित्रं, मध्ये वयसि हरिवंशचम्पूं, परिणते वयसि श्रीनिवासयात्रानक्षत्रमालादिस्तुतिग्रन्थान् निर्मिमायेति संभाव्यते । समुचिता हि सुजनानां देवपराणां कृतवयोऽनुरूपे कर्मणि प्रवृत्तिः । तथाच तदीयस्य श्रीनिवासयात्रानक्षत्रमालाग्रन्थस्यान्तिमे भागे तदीया भगवत्प्रार्थनाः—

"भो श्रीनिवास करुणाम्बुनिधे विधेहि
वासं ह्यमूषु रुचिरप्रतिमासु नित्यम् ।

मद्वंशजैरपि मया च गृहाण पूजां
श्रीभूसुता मम भवान् कुलदैवतं हि ” इत्यादिना ।

एवमेव तदीयवरदराजस्तवादिभ्योऽस्य कवेरभीप्सितवरदराजयात्रासेवा हेवाकालाभनिमित्तको निर्वेदः तदात्वसमुद्यद्भक्तिभरविवशस्यास्य तत्स्तव-निर्मितिः तत्र तत्तत्कालभवत्कांचीस्थलीयभगवदुत्सवगणानां मानससाक्षात्कारसमावेदनादिकं चैतदीयां भगवद्भक्ताग्रेसरतामावेदयति ॥ तदेतस्य कवेः प्रबन्धाः पुस्तकरूपेण तत्सहोदरस्य तदन्तेवासिनश्च श्रीमतः कृष्णराया परनामधेयस्य दासप्पशर्मणो हस्तमासाद्य सुरक्षितं सत् चिरायावर्ततेति सन्तोषहेतुरेषः ॥

तस्यास्य कवेरुक्तग्रन्थप्रणयने प्रवृत्तिः एतदीयं विनयातिशयं प्रकटयति तस्यैवाधोलिखितः हरिवंशचम्पोः तृतीयश्श्लोकः—

“ नाहं शास्त्रविचक्षणो नहि रसालङ्कारवेदी ततः
शङ्के सेयमधोक्षजस्य करुणावेणी न वाणी मम ।
कान्ता कल्पलतेव या मृदुतरा मन्दारमालेव या
सर्वस्मान्मधुरा मनोहरसुधाधारेव या जृम्भते ” इति ॥

अथैतासां कृतीनामामूलाग्रशोधनसमये मम मनसि स्फुरिता साहित्यसम्पत्तिः किञ्चिदिव विदुषामादरजननाय प्रदर्श्यते ॥

तत्र स्तुतिग्रन्थाः प्रायो द्राक्षापाकेन वैदर्भीरीतिमाश्रित्य निबद्धाः

“ बन्धपारुष्यरहिता शब्दकाठिण्यवर्जिता ।
नातिदीर्घसमासा च वैदर्भीरीतिरिष्यते ॥ ” इति,
“ द्राक्षापाकरस विज्ञेयो बहिरन्तस्स्फुरद्रसः ” इति चोक्तेः ।

तत्र कविगतभक्तिभावस्यालम्बनविभावभूतवर्ण्यवस्तुषु विद्यमानमहिमातिशयरूपभावेन सम्यक्परिपोषः समर्थित इति, प्रसिद्धोपमादिसमुचिताः प्रेयोलङ्कारादयः स्फुटा इति नातिविस्तराय प्रयते ॥

समवृत्तमालायास्तु उक्तामारभ्योत्कृत्यन्तषड्विंशतिच्छन्दस्सु भवा-
नां प्रसिद्धानां वृत्तानामुदाहरणमात्रं प्रदर्शितमिति न बहु वक्तव्यम् ॥

नौकाचरित्रन्तु भगवतश्श्रीकृष्णस्य नन्दगोपसदनवाससमये गोपी-
ललनाभिस्सह शृङ्गारलीलानुभवावसरे कादाचित्कीं नौकामधिगृह्य गोपीभि-
स्सह विहरणलीलां वर्णयितुमारब्धम् । तत्र गोपीनां वासुदेवस्य चान्यो-
न्यालम्बनकः, तदात्वसमुपनतविविधानुभावैः विभावैश्च समुल्लासितस्सम्भो-
गश्शृङ्गारः सम्यगुपवर्णित इति स्पष्टमवसीयते । यथा—

"लावण्यं क्वचिदीक्षतेऽधरसुधामाकाङ्क्षते च क्वचित्
वक्षोजेषु नखक्षतिं वितनुते ज्ञात्वाऽऽशयं भाषते ।
एकान्तं भजते क्वचित् क्षणमसौ शेतेऽङ्क एव क्वचित्
सर्वासामपि योषितां स रमते सान्निध्य एव प्रभुः ॥
(पु. १३. श्लो. ११.)

"पश्यामोऽब्जवनं तथैव सखि हा किं वाऽपतन्नेत्रयोः
मुग्धे! सारसकेसरः किमधरे दष्टा सखीन्दिन्दिरैः ।
चेलं कर्षति कोऽस्ति भीरु! पवनः किं वापतद्वक्षसी-
त्याश्लिष्टस्स भिया कयाऽपि सुदृढं कृष्णोऽत्र योषाकृतः॥
(पु. १३. श्लो. १६.)

"ब्रह्मापि स्वसुतां समीक्ष्य सहसा मोहाटवीं प्राविशत्
वृन्दां वीक्ष्य पुरा पुराणपुरुषोऽङ्गीचकार भ्रमम् ।
सर्वज्ञोऽपि स दारुकावनवधूमोहान्धकारेऽपत-
त्पाशं शौरिरिहापि नस्समगमद्भाग्यं वधूनामहो" ॥
(पु. १७. श्लो. ३३.)

इत्यादयः तत्र तत्र विद्यमानाः श्लोका उक्तार्थे स्थेमानमादधति । हरि-
वंशचम्पूस्तु श्रीमन्महाभारतशेषस्य हरिवंशनाम्नः श्रीव्यासोपज्ञग्रन्थस्य

कथामालम्ब्य प्रवृत्तः । तत्र विद्यमानाः श्रीकृष्णकथाः संग्रहेण गद्यपद्यरूपेण सङ्कलय्य रसभावानुगुणतया वर्णिताः । तत्रैकान्तेन नैका वृत्तिः, रीतिः, पाकश्चाश्रितः वर्ण्यानुगुण्येन भेदं प्रापित इति न तत्र विस्तरावश्यकः॥

अथात्र स्तुतीः समवृत्तमालां च विहाय सर्वत्र गुणालङ्काराणां कानिचिदुदाहरणानि प्रदर्श्यन्तेः—

नौकाचरित्रेः—

अत्र क्रीडन्मरालीततधुतगरुदुद्भूतवातावधूत-
व्याकोचाज्जातजातोत्पतितमधुकरीव्रातसङ्गीतविद्याम् ।
संश्लाघन्ते शिरोभिस्तटतरुनिवहाः पश्यताऽऽगच्छतेति
प्रत्युद्गम्य प्रणीता इव मृदुमरुता तास्त्रियस्तामपश्यन् ॥

(पु. ९. श्लो. २०)

अत्र चतुर्षु पादेषु स्वरारोहावरोहयोरतिरम्यत्वरूपो गतिगुणः स्पष्टः।

"गतिर्नाम सुरम्यत्वं स्वरारोहावरोहयोः" इत्युक्तेः ।

पूर्वार्धे समासभूयस्त्वस्योपलम्भात्, ओजोगुणोपि । तटतरुप्रसंचलनस्य मधुकरीसङ्गीतसमभिनन्दनरूपतोत्प्रेक्षणात् उत्प्रेक्षालङ्कारश्च व्यक्तः । अभिमतार्थस्य सामग्र्येण विस्पष्टं वर्णनात् प्रसादगुणोऽपि सार्वत्रिकः । वर्ण्यमानार्थानां सहृदयहृदयसंश्लेषितया समुपवर्णनात् माधुर्यं च । अन्येऽपि गुणाः निपुणैस्तत्र तत्र यथालक्ष्यं समुन्नेयाः ॥

स्वेदक्लिन्नमृगीमदं श्लथकचप्रभ्रंशि पुष्पोत्करं
व्यालोलालकतारहारमसकृद्विस्रस्तरुद्धांशुकम् ।
हृष्यत्कङ्कणनिक्वणं स्तनतटे प्रभ्रष्टचेलांचलं
नौकायाः परिवर्तनेन तदभूत्सर्वं वधूमण्डलम् ॥

(पु. १२. श्लो. ७.)

अत्र नौकापरिवर्तनसमयसञ्जातः स्त्रीणामवस्थोत्थपतिकरः स्वभावोक्त्या चारु वर्णित इति सहृदयानां सुविशदम् ॥

एतत्तु हारिवंशचम्पूग्रन्थः शृङ्गारवीररसप्रधानः धीरोदात्तमहागुणशालिश्रीकृष्णनेतृकः प्रायो महाकाव्योपयुक्तवर्णनशाली कैश्चिदूनोऽपि महाकाव्यं भवितुमर्हतीति सुवचम् ॥

"नगरार्णवशैलर्तुचन्द्रार्कोदयवर्णनम्"

इत्यादिनाऽऽवश्यकवर्णनीयविषयानभिधाय,

"एतानि यत्र वर्ण्यन्ते तन्महाकाव्यमुच्यते ।
एषामष्टादशानां यैः कैश्चिदूनमपीष्यते" इत्युक्तेः ।

तत्तद्वर्णनस्थानानि तु अभिज्ञैः तत्रतत्र द्रष्टुं शक्यानीति न मम तत्प्रयासावश्यकः । अत्रापि वृत्तिरीत्यादयः रसानुगुणा आलम्बिताः । प्रायो वृत्त्यनुप्रासादयश्शब्दालङ्काराः, उपमादयोऽर्थालङ्काराश्च सुस्पष्टाः । रसभावादिपरिपोषः रसिकजनैः समुन्नेतुं शक्य इति बहोः वक्तव्यस्य सत्त्वादतिविस्तरोऽत्र न बुधेभ्यो रोचत इति विरम्यते ॥

अधुना श्रीमतः तातादशदासप्पशर्मणः पुत्रेषु ज्येष्ठः लौकिकाङ्गलविद्यापण्डितेषु सुगृहीतनामधेयः गीर्वाणविद्यायामपि साहित्यव्याकरणादिषु सुशिक्षितः श्रीमदानन्दतीर्थभगवत्पादोपज्ञवेदान्तनिबन्धेषु विरचितनिरन्तरव्यासङ्गः आस्तिकशिरोमणिः श्रीमान् वि॰ वेङ्कोबरायशर्मा श्रीमन्मैसूरु द्वितीयराजधान्याः मङ्गळपुर्याः (बेङ्गळूरु) डेप्युटिकमीषनर् नामकसमुचितमधिकारमावहन् राराजति । तेन महाशयेन स्वपित्रा निजहस्ते निवेशितं स्वगुरोः ग्रन्थजातं स्वपरमगुरुसेवारूपेण प्राकाश्यं नेतुकामेन तेऽमी प्रबन्धाः तत्प्रकाशनसमुचितग्रन्थशोधनादिकं सर्वमपि निर्वोढुमहमलङ्कर्मीण इति सम्प्रत्ययेन तदीयविश्वासमुख्यभाजनस्य मम हस्ते समर्प्यन्त । सोहं तदर्पि-

तानि पुस्तकान्यामूलाग्रं सावधानमाकलय्य तद्ग्रन्थप्रणेतरि सञ्जातबहुमानातिशयस्सन् तत्र मयोपलब्धान् कांश्चन प्रामादिकान् दोषान् परिहृत्य, स्तुतिप्रबन्धानेकरः, सङ्गृहीतमान्यां नौकाचरितं च पुस्तकान्तरे, हरिवंशचम्पूमेकस्मिन्नेव पुस्तके सन्निवेश्य मदीये मैसूरुराजधानीवर्तिनि जयाख्ययन्त्रे देवनागराक्षरैः समुद्रयम् । प्रबन्धप्रणेतुः जीवितवृत्तान्तप्रभृतिकमेतद्वेङ्कटवरायमहाशयादन्येभ्यश्च विदितपूर्ववृत्तेभ्यो महद्भ्यस्संगृह्य यथाश्रुति निवेदितमत्र मयेति मामनुगृह्णन्तु महत्तमा इति प्रार्थये; आशासे च ॥

एतादृक्स्तवनार्हकार्यशतमातन्वन् सदा सद्गुणैः
सौजन्यादिभिरन्वितो विजयतां वेङ्कटवरायस्सुधीः ।
श्रीमत्कृष्णमहीमहेन्द्रकरुणा वर्धिष्णु चास्मिन् सदा
श्रीकृष्णे परदेवभावधिषणा भोभूयतां निश्चला ॥ इति ॥

एवमावेदयति,

मैसूरु
२२-१०-१९२३

पण्डितरत्नं रायपाल्य राघवेन्द्राचार्यः,
महाराजास्थानधर्माधिकारी,
अनुभूतपूर्वराजकीयप्राच्यकोशागार-
प्रधानपण्डिताधिकारश्च ।

श्रीकृष्णाय नमः

# श्रीहरिवंशचम्पू

## प्रथमो विलासः

श्रियं नः पुष्णातु श्रितनिचयनीरेरुहरविः
पविः प्रत्यूहाद्रेः कविरमणिः कश्चन कृती ।
निरातङ्कोद्यत्स्फुटनिकटवेलन्मधुकरी-
स्वामोदश्लाघाचरणनिपुणोऽस्मद्गुरुमणिः ॥ १ ॥

लक्ष्मीं तनोतु मदने वदने च वाणीं
मेधां हृदि त्रिभुवनेऽपि यशो निकामम् ।
भक्तैकबन्धुः कलुषहा करुणाम्बुराशिः
श्रीशो विरिञ्चिशिवशक्रनियामको नः ॥ २ ॥

नाहं शब्दविचक्षणो नहि रसालंकारवेदी ततः
शङ्के नेयमधोक्षजस्य करणावेणी न वाणी मम
कान्ता कल्पलतेव या मृदुतरा मन्दारमालेव या
सर्वस्मान्मधुरा मनोहरसुधाधारेव या जृम्भते ॥ ३ ॥

तार्क्ष्यं वीक्ष्य कुलिङ्गकोऽपि कुतुकाद्ध्यम्बरं गाहते
किं दिव्यामृतमानयंस्तदिह किं स वाऽपि तावद्विहरेत् ।

त्रविचित्रितानि अतिविपुलमहितमन्वन्तरानुसङ्कीर्तनसमेधितानि सकलसुरनरामोदनीयेक्ष्वाकुकुलकथाकथनकञ्चुकितानि निखिलमनोरथापूरकपितृदेवतामाहात्म्यप्रशंसामांसलानि श्रावकजनवरसुतोत्पत्तिहेतुसोमोत्पत्तिकथानिबन्धबन्धुराणि विचित्रतरनलेलोत्पत्त्युदन्तदन्तुराणि अतिविमलवाराणसीशवंशविवरणविस्तारितानि वासवानुजकृपासमृद्धवृष्ण्यन्धकान्वयविमलविपुलचरितानि एतावताऽनुवर्णितानि ॥ ८ ॥

तस्याद्भुतोरुचरितस्य कथां ब्रवीमि
कृष्णावतारविहितामिह तामहो या ।
भूतेषु कल्पलतिकेव समीहितानि
सूते यथार्थिन मनाङ्मनसि स्मृतेव ॥ ९ ॥

नारायणो निखिलसद्गुणपूर्णदेहः
सर्वेश्वरो ह्यपरचिन्त्यमहाविभूतिः ।
भूत्वाऽऽत्मना स्वयमिदं निखिलं ससर्ज
यो वै गुणत्रयविभिन्नमहास्वरूपः ॥ १० ॥

सर्गे पुनःपुनरजेन रजोभियोगाद्यो
वा सृजत्यखिलमेव जगद्विचित्रम् ।
अन्ते हरत्यपि हरेण तमोभियोगा-
त्सत्त्वेन रक्षति सदा स्वयमेव देवः ॥ ११ ॥

भूमिः खलोद्धरणनिर्भयसर्वराष्ट्र-
संरक्षिताखिलजनाजिसमेराभिरिता ।

संप्राप गेहमभयाय सरोजयोनेः
सन्नेव नोः पयसि नाविकबुद्धियोगम् ॥ १२ ॥

ग—अथ शतमखमुखाः सर्वेऽपि गीर्वाणाः संवीभूय सत्वरमुरुतरभर-सम्पहन्त्या शरणमभिलषन्त्या तया भूम्या सह सरोरुहासनमग्रतो निधाय निखिलमुनिजनमनोभीष्टपेटिकाभिः सर्वर्तुसमुदयसमुज्जृम्भितामोदमोदिताखिलदिग्वधूटिकाभिः विविधवनवाटिकाभिः सुन्दरामकृशोदरीं बदरीमासेदुः ॥२॥

ग—तत्र ते सकलचराचरपरिपालनपटीयसीं अतिचिरन्तनप्रेयसीं कामपि योगनिद्रामुद्रां भद्रामासाद्य रहसि शयानं खगेशयानं समालोक्य सविनयभयमञ्जलिकमलमुद्वहन्तो रोदसीकुहरमामोदयन्तो निखिलश्रुतिहितस्वैर्जयस्तवैरेव देवमेवं प्रबोधयामासुः ॥ ३ ॥

जयजय जहि निद्रां सर्वलोकैकभद्रां
जगति भवतु यज्ञः प्रोत्थिते देव यस्त्वम् ।
सपदि विकसतां तौ तेऽक्षिणी पुष्पवन्तौ
वयमपि तव गात्रे स्याम कामाभिपूर्णाः ॥ १३ ॥

ग—एवं प्रबोधितो भगवान् प्रपन्नार्तिहरणविचक्षणः सरोजेक्षणः सपदि शयनोत्तमादुत्थाय पुरतस्सविनयमुपस्थितानेतान् विधि-शतमखमुखान् बर्हिर्मुखान् प्रभातसमयसमुन्मिषत्कुशेशयगर्वसर्वस्वतस्करैः निद्रारुणितनिजनयनान्निर्यन्मरीचिवीचीविस्तारैरामोदयन् सुधारसमधुरधारासहचरीं अपारकृपाकूपारनर्मकुमारीं निजदरस्मितरुचिरधारासहोदरीं वाचमाचष्ट ॥ ४ ॥

को वा कामो भवतु भवतां उक्ताः स्वागतं वः
का वा भीतिः कथयत कुतः कस्य किं केन कार्यम् ।
क्रव्यादानां न खलु चरितैर्जातमस्त्वस्ति लोके
कस्मिन् क्रोधः पततु स हि मे कोऽस्तु पात्रं कृपायाः ॥

ग—एवं भगवतः कुशलानुयोगपुरस्सरां अम्भोदनिनदगम्भीरां गिरां सरणिमाकर्ण्य सपदिममेधितानन्दनीरधिनिमज्जमानमानसाः सुमनसः तस्मै परस्मै पुंसे विज्ञापयमासुः ॥ ५ ॥

ग—भगवन् कथमस्त्वस्ति सम्भवेद्भवत्कृपादर्शितानामस्माकं; किं तु भवता समुद्धृतेषु निखिलरक्षःकण्टकेषु निरन्तरनिरन्तरायसम्पादिताभिः अ-ध्वरक्रियाभिः अनेकशः प्रतिनगरमहरहः प्रवर्धमानैः राजन्यसैन्यसमुदयभरैः अतिदैन्यमापन्ना सन्ना करिणिरिव शरणैषिणी धरणीयमस्याः शरणीभवता भवता भारावतरणमवश्यकरणीयमिति ॥ ६ ॥

अथ विबुधसमूहैस्साकमुर्व्या च सोऽगा-
त्कनकवसनवीतो द्राग्जटामण्डलाढ्यः ।
खगपतिमधिरूढो दिव्यरूपस्वरूपं
मणिरुचिरसभाढ्यं मेरुशृङ्गं मुरारिः ॥ १९ ॥

ग—तत्र विचित्रतरतपनीयविमानवेदिकास्तम्भतोरणायुतखचितवि-विधरत्नरश्मिच्छटामण्डलैरयुतमार्ताण्डमण्डलोदयप्रकाशं सभान्तरप्रदेशं प्रवि-श्य किमप्युपचारपरिष्कृतमत्यद्भुतं विमानमधिरुह्य दिव्यासनसन्निविष्टे विष्टर-

अनति यथोचितासनसन्निविष्टेषु च त्रिविष्टपाधिपतिविशिष्टेषु देवेषु प्रति-विमानतोरणस्तम्भलम्बमानमन्दारमालिकापरिमलमिलन्मिलिन्दबृन्दनिरर्गलनि-र्गलद्गीतमाधुरीश्रवणकुतूहलेनेव प्रकृतकार्यगौरवेण विधिना मरुन्मुखेन संरु-द्धेषु सकलकलकलेषु सूचितसमया सविनयमुत्थाय धरणी करुणमिदमरुणतरु-णातपाक्रान्तश्रमोन्ते जलदगर्वसर्वस्वहारिणे स्वर्णाम्बरधारिणे शङ्खचक्रगदा-धारिणे किमपि व्यजिज्ञपत् ॥ ७ ॥

देव त्वयैव हि पुरा परिपूर्णमस्या
या मेदिनीति मधुकैटभमेदसाऽभूत् ।
पृथ्वी प्रवृद्धमनुजोरुभराभिखिन्ना
साऽहं तवाद्य चरणौ शरणं प्रपन्ना ॥ १६ ॥

दंष्ट्रा वराहवपुषस्तव यज्ञमूर्तेः
यामुद्दधार सहसा विलयाब्धिमग्नाम् ।
या रक्षिता त्रिभुवनक्रमणेऽपि भूयः
साऽहं तवाद्य चरणौ शरणं प्रपन्ना ॥ १७ ॥

या भार्गवेण भरनिर्हरणेच्छयैव
संमूर्दिते नृपकुले क्षतजेन दिग्धा ।
दत्ताऽस्मि कश्यपमुनेर्मनवेऽथ तेन
साऽहं तवाद्य चरणौ शरणं प्रपन्ना ॥ १८ ॥

एवं निशम्य भगवान् भुवनार्तिहारी
मा भैः शमं व्रज धरे धरणीति सम्यक् ।

गम्भीरमञ्जुवचसा स महीं मुहृष्टां
तां केकिनीमिव घनस्तनितेन तेने ॥ १९ ॥

ग—अथ विरञ्चिरपि विदितविष्ण्वभिप्रायः प्राह पुरन्दरप्रमुखान् "देवाः सर्वेऽपि यूयमुर्व्यां वृष्ण्यादिकुलेष्वात्मप्रतिरूपाः प्रजाः प्रजनयध्वम् । पुरा कदाचिदम्भोधिरोधसि काश्यपेन सह पूर्वप्रवृत्ताः कथाः प्रकुर्वतो मम पयोधिरुत्तुङ्गतरङ्गया गङ्गया सह समस्त्वुवनतरङ्गवेगं वेलामतिक्रम्य विजृम्भमाणः शान्तो भवेति वदति मयि तद्गुरुत्वमापन्नः शापेन मम शन्तनुरिति भारतान्वये सम्भूय तदनुरूपमेव भुवि प्रवृत्तायां गङ्गायां वसुषु सप्तसूत्पन्नविनष्टेषु अष्टमं चिरायुषमात्मजमनुरूपमासाद्य पुनरपि काञ्चन स्त्रियमुद्वाह्य तस्यां विचित्रवीर्यं नाम तनूजमुदपादयत् ॥ ॥ ८ ॥

ग—तस्यापि धृतराष्ट्रपाण्डुनामानौ द्वौ सुतौ उत्पन्नौ साम्प्रत भुवनमलङ्कुरुतः । तयोः प्रथमस्य भार्यायाः गान्धार्याः अपरस्य भार्ययोः कुन्तीमद्रतनूजयोरपि तनूजानामन्योन्यकलहो भविता । तेन भुवोऽस्याः भारावतरणं भविष्यति " इति ॥ ९ ॥

ग—अथ भूरपि स्वयंभूगिरमाकर्ण्य स्वस्थचित्ता निरगात् । देवाश्च यथानियोगमकुर्वन् ॥ १० ॥

अथ विपुलजटाघनानिकेली विनोदी
ज्वलदनलसवर्चा जातरूपोपवीती ।
विधुकरमितवासा वेदगान्धर्ववेदी
करतलधृतवीणः केशवं नारदोऽगात् ॥ २० ॥

अधिसभमभिदेवं माधवं मन्त्रभेदी
मरभसमुपयातो लोकवृत्तान्तदूतः ।
दिशिदिशि निजवीणागानसौरम्यवेणी-
विहरणमुरु तन्वन्नुज्जगौ नारदोऽसौ ॥ २१ ॥

सुचिरमिह रमेशस्याग्रतः साब्जयोनेः
रुचिरगितवीणादण्डनीलाम्बुदौघे ।
विरमति बहु वृष्ट्वा गीतसौरभ्यधाराः
गिरिसरिदिव जज्ञे गीरियं नारदस्य ॥ २२ ॥

अत्यद्भुताऽस्ति मधुरा मधुरेति काचित्
तीरे पुरातनपुरी मिहिरात्मजायाः ।
सन्तुष्टपुष्टजनशोभिषु शर्मसद्मे-
ष्वक्ष्णोर्महोत्सवकारी कवरी पुरीणाम् ॥ २३ ॥

यत्रेन्द्रनीलमणिनिर्मितनाट्यशालाः
निर्यन्मृदङ्गनिनदं घनगर्जबुद्ध्या ।
नृत्यन्ति केकिनिवहा विततोर्ध्वबर्हाः
तत्रारोपिकमभूम्मितमङ्गनानाम् ॥ २४ ॥

यत्रेन्दुकान्तमणिनिर्मितसप्तशाला
दिव्येन्द्रनीलभवना यमुनान्तराला ।
सादृश्यमुद्वहति या नवधारिताङ्-
कलार्भमभचिराकशाङ्कमूर्तेः ॥ २५ ॥

आज्ञां वहन् शिरसि रावणवंशवह्नेः
रामस्य रत्नमकुटीमिव शत्रुहन्ता ।
शौर्याद्धिौ स लवणं लवणं विधाय
यां तद्वने मधुवने विदधे विशालाम् ॥ २६ ॥

यस्यां कदाचन पथा किल चन्द्रशाला-
जालान्तरं निशि विशन् प्रहतोऽङ्गनायाः ।
पत्रं कुचे रचयता कुपितेन केना-
प्यद्यापि नोज्झति कलङ्कमिमं हिमांशुः ॥ २७ ॥

खद्योतमञ्जयधिया पतते खगाय
रत्नानि हन्त वितरन्ति वणिक्कुमाराः ।
शूद्रार्भकाश्चणकमुष्टिमुदग्रधान्य-
राश्यग्रगा अपि रवेस्तुरगाय यस्याम् ॥ २८ ॥

काल्ये शुभैर्द्विजसुतोदितवेदघोषै-
स्तूर्यस्वनैरपि सदा प्रतिबुद्धसत्त्वाम् ।
यामभ्युपैति सरसीषु सुखं विहर्तु
वाहो विधेरपि दिशासु निशामिवेन्दुः ॥ २९ ॥

ज्योत्स्नीषु यत्र यमुनावनवीथिकायां
विष्वक्प्रकॢप्तमणिकुट्टिमवेदिकासु ।
क्रीडन्ति पौरमिथुनानि तृणाय मत्वा
पौरन्दरोपवनकामविहारसौख्यम् ॥ ३० ॥

तामावसद्गजतुरङ्गवतीं स राजा
कोऽप्युग्रसेन इति भोजकुलाधिराजः ।
सामन्तराजगजराजमृगाधिराजो
यस्सम्पदा वितरणेन च राजराजः ॥ ३१ ॥

तस्यात्मजो निजभुजार्जितभूरिकीर्तिः
कंसोऽद्य शास्ति स महीं पितरं निरुद्ध्य ।
प्राक्तारकासुरजये शमितस्त्वयैव
यः कालनेमिरिति दुस्सहकालकूटः ॥ ३२ ॥

येये त्वया युधि पुरा दनुजा विशस्ता-
स्ते साम्प्रतं मनुजतामुपगम्य लोकान् ।
मथ्नन्ति तांस्त्वमवतीर्य महीतलेद्राक्
भानुर्यथा हिमचयान् गमय प्रणाशम् ॥ ३३ ॥

अंशैर्बभूवुरमरा भुवि सर्व एव
भूमेर्भरावतरणाय यथानियोगम् ।
किं तैर्भवेदनवतारवति त्वयीह
तारागणैरनुदिते शशिनीव रात्रौ ॥ ३४ ॥

यदा धर्मग्लानिर्भवति महतामुत्कटभयं
दुराचारक्रूराद् द्रुहिणवरदृप्तासुरजनात् ।
तदाऽऽत्मानं भूम्नौ सृजसि विबुधानामभयद-
स्त्वमेवंसङ्कल्पः कथमिह चिरायस्यवसरे ॥ ३५ ॥

इतीरितमतीव मुद्भरतुलितं वचो नारदा-
द्धिताय जगतो हरिर्निजमतं निशम्यादरात् ।
वचोऽमृतमवाकिरद्विदितमेव सर्वं ममे-
त्युनात्र च पुनर्विधे क्नु कथं जनिर्मेऽस्त्विति ॥ ३६ ॥

अथ विधिरिदमूचे कश्यपः शापतो मे
ह्यदितिसुरभिजाभ्यां गा हरन् पाशिनोऽभूत् ।
अधिमहि वसुदेवो देवकी रोहिणी ते
स भवतु तव तातो मातरौ स्तां च ते द्वे ॥ ३७ ॥

ग—एवं विज्ञापितो भगवान् स्वसदनगमनाय वेधसमनुज्ञाप्य स्वय-
मवतारोन्मुखो बभूव ॥ ११ ॥

अथ नारदोऽपि सत्वरं मधुरां प्रविश्य कंसेन विधिवदभ्यर्चितः सुमेरु-
शिखरवृत्तान्तमस्मै निखिलमावेद्य देवक्याः पितृष्वसुरेव तेऽष्टमो गर्भः तव
रिपुर्भविष्यत्येतदतिरहस्यमत्याप्ततयाऽभिहितमतोऽद्यैव निखिलकामैरात्मान-
मापूरयेत्याख्याय यथागतं निरगात् ॥ १२ ॥

कंसोऽपि हसन् किमिदमिति किमिदन्तरेव निध्याय निजनगरमभित-
स्सत्रोपमातोषयन्निव स धृष्टं स्पष्टमिदमाचष्ट ॥ १३ ॥

अनृतमिदमलीकं नारदः प्राह भृत्याः
दिशि दिशि विहरध्वं सत्त्वहिंसाभिरद्य ।
लसति निशि हिमांशौ कैरवाणामिवार्का-
न्मयि सति मनुजा वो माधवान्माऽस्तु भीतिः ॥ ३८ ॥

ग—पुनरपि स भोजसूनुश्चिन्तयाऽहन्तया च मुहुर्मुहुरुपकृष्यमाणः मुनिवचनमसमक्षणः मन्त्रिभिस्सह संमन्त्र्य देवकीगर्भनिर्भेदनमेव निजमनः-खेदशमनममन्यत ॥ १४ ॥

इममप्युदन्तं अम्भोजासनतनूजोऽञ्जसाऽम्भोजलोचनाय सर्वमाचख्यौ॥ १४

तदनु हरिरपि पाताळनिलयान् कालनेमितनयान् कमलासनवरेण सर्वावध्यानपि हिरण्यकशिपोरात्मान्यतो वधार्थनिमित्तेन शापेन स्वपितृवध्यान् जलगर्भशायिनः षड्दैत्यान् क्रमेण योगनिद्रया देवकीगर्भमुपनिनाय ॥

जातांस्तान् क्रमशो निकृत्य मुमुदे गर्भानुदग्रायुधो
व्याधोऽयज्ञमृगार्भकानिव मुहुः कंसो नशिष्यन्नसौ ।
विद्युत्पातविमृग्नवानविटपी धाराधरोद्यत्पयो-
धारापातविधूननेन कुपुकी भूयान्न किं द्विक्षणम् ॥ ३९ ॥

दुर्गा संस्तवतोषिता नृहरिणा ह्युक्ता वरैस्तर्पिता
देवक्या अपि सप्तमं समनयद्गर्भं यदा रोहिणीम् ।
गर्भोऽस्या गळितो भयादिति जना ऊचुस्तदा रोहिणी
प्रासूतात्मजमंशतः फणिपतेर्यश्शुक्लकेशो हरेः ॥ ४० ॥

अथ किल मधुरायामष्टमं देवकी सा
रुचिरमहनि यस्मिन् गर्भमाधत्त देवी ।
अभवदहनि तस्मिन् गर्भिणी गोकुले साऽ-
प्यधिकसुकृतभूमिर्नन्दपत्नी यशोदा ॥ ४१ ॥

हरिरिह वसुदेवप्रेयसीगर्भमागा-
द्विकचनलिनगर्भे भृङ्गराजो यथैव ।
अपरमथ यशोदागर्भदुर्गं च दुर्गा
परिचितपरिहृता पञ्जरं शारिकेव ॥ ४२ ॥

अजमजरमनन्तं श्रीशमभ्येत्य भूमौ
त्रिजगदवनहेतोर्देवकीगर्भसंस्थम् ।
हरिमुचितवचोभिः खस्थिता एव सर्वे
विधिमुखसुरसङ्घास्तुष्टुवुर्देवदेवम् ॥ ४३ ॥

घनतमसि निशीथे गाढनिद्राविमूढे
जगति शुभमुहूर्ते देवकीनन्दपत्न्यौ ।
सममथ सुषुवाते माधवं चास्य मायां
शतमखहरिदिन्दुं द्यौर्यथा कौमुदीं च ॥ ४४ ॥

न केवलं वृष्णिकुलं पवित्रितं
जगत्समग्रं न परं विमोहिताः ।
आरक्षका एव निसर्गदुर्जनाः
सर्वेऽपि तत्राद्भुतबालजन्मना ॥ ४५ ॥

स्थाने हि तद्यदभवद् घनपुष्पवृष्टिः
स्वर्दुन्दुभिध्वनिरथोऽप्सरसां च लास्यम् ।
हा तद् द्वयं कथमनन्तवनोदयेऽस्मिन्
ज्योतींषि जज्वलुरलं विमला दिशश्च ॥ ४६ ॥

आमौलिकिरीटमणिकुण्डलमेखलाढ्यं
केयूरहारवरकङ्कणनूपुराढ्यम् ।
इन्दीवरद्युतिमुषा वपुषाऽऽत्तदिव्य-
पीताम्बरं करधृतासिगदाब्जचक्रम् ॥ ४७ ॥

विद्युत्पिनद्धसबलाकसशक्रचाप-
सन्ध्याम्बुदद्युतिमनोहरभव्यरूपम् ।
श्रीवत्सवक्षसमुदीक्षत मन्दहास-
स्मेराननाम्बुरुहमानकदुन्दुभिस्तम् ॥ ४८ ॥

आनीलकुञ्चितशिरोरुहशोभमान-
वक्त्राम्बुजं विमलपद्मदलायताक्षम् ।
बालं विलोक्य वटपत्र इव स्वमातु-
रङ्के शयानमवदत्स हि भीतभीतः ॥ ४९ ॥

रूपं तदेतदुपसंहर विश्वमूर्ते
कंसाद्बिभेमि कलुषादिव पुण्यशीलः ।
पत्न्याऽनया परमपूरुष हर्षशोक-
मध्यस्थया सह नतोऽस्मि तवाङ्घ्रिपद्मम् ॥ ५० ॥

तेनोदितस्तमुपसंहृतदिव्यरूपं
बालं निनाय शयनं स तु नन्दपत्न्याः ।
तद्बालिकां निजवधूशयनं च सिन्धु-
श्चन्द्रं यथा स्वमुदकं नवचन्द्रिकां च ॥ ५१ ॥

तन्निर्गमागमनयोर्वसुदेवदृश्योः
शोकायुतं विघटितं न कवाटमात्रम् ।
हर्षायुतं सुघटितं न पुनस्तदेव
तीर्णा मयाश्रुतटिनी न रवेस्सुतैव ॥ ५२ ॥

ग—अथ नृशंसः कंसः वसुदेवनिवेदितदेवकीप्रसवः सरभसमुत्थाय तत्सूतिकागृहान्तिकमागतः पाहि पाहि दारिकेयमिति बहुशोऽर्थयन्त्या एव गलदश्रुस्रवन्त्यास्तस्याः बालिकारूपं जगति समुन्मिषत्किमपि देवताङ्कुरं कुञ्जर इव रम्भाङ्कुरं समाकृष्य सत्वरमात्मनो यशस्यायुषि वपुषि च स्वयमेव कुण्डलनामारचयन्निव नभसि बहुशस्तद्भ्रामयन् शिलातले सुदृढमपोथयत् ॥ १७ ॥

साऽपि शारिकेव तत्करकमलपञ्जरान्निर्गत्य शिलातलमस्पृष्ट्वैव गगनतलमुत्पतन्ती दारिकारूपमुपसंहरन्ती मात्सर्यमिदमभिदूषयन्ती उच्चैः परिहसन्ती विविधवरायुधपरिष्कृताष्टभुजेन विमुक्तमूर्धजेन रूपेण रोदसीकुहरमुद्द्योतयन्ती कंस किमनेन वृथा श्रमेण स तु संवर्धत एवापरत्र यः खल्वनतिचिरमेव तव शोणितेन मामाप्याययिष्यतीति गिरमुदीर्य निखिलदेवैरभिष्टुता वृष्ण्यभीष्टदेवता भूत्वा किमपि देवतासदनमाससाद ॥ १८ ॥

अथ कंसोऽपि भग्नप्रयत्नतया समुद्विग्नहृदयः निजापराधं क्षमापयन् रहसि देवकीपादमूले निकृत्तमूलः साल इव निपत्य भग्नदंष्ट्रो भुजङ्गम इव निश्वसन् वेष्टमानः तया देवक्या दैवकृतं विज्ञाय कथंकथमुत्थापितोऽपि दूयमानान्तःकरण एव निजशरणमाजगाम ॥ १९ ॥

व्रजमथ वसुदेवप्रेरितो नन्दगोपः
ससुतवनित एव प्राप कंसोपकण्ठात् ।
तपनदुहितृतीराद्घोपगोपीसहस्रै-
रपि दधिघृतगन्धैः पूरितं गोसमृद्धम् ॥ ९३ ॥

तत्र गत्वैव गार्ग्योपि जातकर्मादिकाः क्रियाः ।
कारयामास विधिवद्रोहिणीनन्दपुत्रयोः ॥ ९४ ॥

नामैवं स तयोश्चक्रे वसुदेवपुरोहितः ।
सङ्कर्षणो रौहिणेयः कृष्णोऽयं नन्दनन्दनः ॥ ९५ ॥

इति हरिवंशचम्पौ प्रथमो विलासः



# अथ द्वितीयो विलासः



व्रजभुवि ववृधाते वल्लवीलोचनान्तः-
    करणचयचकोरीकैरवाह्लादिरूपौ ।
शमितभुवनतापौ ताविमौ बालरूपौ
    शरदि विशदपक्षे शीतरश्म्यम्बुधीवा ॥ १ ॥

शिशुरपि स कदाचिच्छौरिरुत्तानशायी
    पृथुमपि शकटाक्षं पातयित्वा सलीलम् ।
क्षुधित इव मनोज्ञा दर्शयन् बालचेष्टा
    निजमृदुकरपादं प्रोत्क्षिपन्नारुराव ॥ २ ॥

शकटभयविमुक्तं सत्कमङ्के स्वमातुः
    निजसुतमवलोक्य प्रेमबाष्पं विमुञ्चन् ।
सकलभुवनरक्षादीक्षितस्यापि नन्दः
    तदुचितमनुतन्त्रैस्तस्य रक्षां वितेने ॥ ३ ॥

अथ रहसि निशीथे पूतना कंसधात्री
    गरलमदिशदस्मै स्वस्तने न्यस्य सोऽपि ।
तदपिबदसुमिश्रं तां मृतां चक्रवच्च
    प्रभुरहह पदेन स्वेन चिक्षेप दूरात् ॥ ४ ॥

गरलमपिबदेको नन्दगोपस्य बालो
भुवनभयदरूपा सा मृताऽन्येति चित्रम् ।
न परमपरमेतत् स्तन्यदा सा मुकुन्दे
यदभजत विमुक्तिं मोदमन्ये व्रजस्थाः ॥ ५ ॥

एकप्रमाणगतिवेषवयोविलासौ
जानुप्रसर्पणपरौ बलरामकृष्णौ ।
क्रीडाभिरध्वनि परस्परसम्प्रसक्तौ
व्योम्नि प्रभाभिरिव शारदचन्द्रसूर्यौ ॥ ६ ॥

विक्रीडतोः पथि रजोभिरहीनतन्वोः
जानुद्वयेन भुवि चंक्रमणादिरूपा ।
लीला बभूव बहुधा बलनन्दसून्वोः
तस्मिन् व्रजे कलभयोरिव काननान्ते ॥ ७ ॥

अथ नवनवनीतं तक्रभाण्डान्तरस्थं
व्यभजदनुचरेभ्यो बालकेभ्यो यथेष्टम् ।
मुहुरपि स हि कृष्णो व्योमभाण्डान्तरस्थं
शशिनमिव सुरेभ्यो भागशः कृष्णपक्षः ॥ ८ ॥

तक्रं पयो दधि घृतं स्वयमेष हृत्वा
पीत्वा यथेष्टमवशिष्टमदाच्छिशुभ्यः ।
भूयः क्वचित्पृथगमूनि यथाविनोदं
बालो व्यमिश्रयदथाप्स्वनलेऽक्षिपच्च ॥ ९ ॥

करधृतनवनीतो देवकीसम्प्रसूतः
स्फितरुचिरवलाशो नीलवज्रप्रकाशः ।
उरुदधिकणदिग्धो बालकेलीविदग्धो
घुडुशशिकरचित्रं व्योम जित्वा ननर्त ॥ १० ॥

वत्सानपाययदुपाश्रित एव धेनूः
बालांश्च सोऽजयदनेकविहारभेदैः ।
दध्यादिकं च हरतो ददतोऽर्भकेभ्यः
नास्य स्वगेहपरगेहविवेचनाऽभूत् ॥ ११ ॥

बालानाकृष्य केशैरयमहह मिथो गोपि बध्नाति कुम्भान्
सङ्ख्यातीतान् भिनत्ति प्रसभमुरु दधि क्षीरमश्नाति नित्यम् ।
दुष्पुत्रे पश्य यामः क्वनु कथमिति सा गोपिकाभिर्यशोदा
रुद्धा मुग्धाऽतिरोषात्सुतमथ सहसोलूखले तं बबन्ध ॥ १२ ॥

स्थाने हि सन्ततमनन्तगुणैस्सुपूर्णो
देवो यतोऽभवदनन्तगुणैरपूर्णः ।
माताऽपि तस्य तत एव गुणैरबद्धं
बाले चकार सहसाऽत्र गुणैकबद्धम् ॥ १३ ॥

कर्षन्नुलूखलमिमं यमलार्जुनाभ्यां
रुद्धो बभञ्ज तदिमौ स समूलमेव ।
मद्रोधिनां गतिरियं सहसा भवित्री-
त्याख्यापयन्निव तदीयरवैस्त्रिलोक्याम् ॥ १४ ॥

अमुमथ समुदीक्ष्य द्राग्यशोदाऽथ देवा-
त्त्वमसि तरुविमुक्तस्तात मत्पुण्यराशे।
भजभज भुजमध्यं वत्सवत्सेति वाचा
निजसुतमुपगृह्य प्रेमसान्द्रा बभूव ॥ १५ ॥

अथ कृतबहुलीलौ रोहिणीनन्दबालौ
श्रवणनिहितपिञ्छौ पल्लवापीडवाञ्छौ।
हृतमधुफलमूलौ नीलपीतोरुचेलौ
वनभुवि विहरन्तौ वत्सपालावभूताम् ॥ १६ ॥

क्वचिद्गायन् गेयान्यतिमधुरमालोलनयनं
क्वचित्पश्यन् दध्योदनममृतकल्पं च सबलः।
क्वचित्खेलन् बालैः क्वचिदपि पिबन् पेयममलं
बभौ कृष्णो वत्सैर्वनभुवि यथाऽर्को दिवि करैः॥ १७ ॥

ग—अथ पूतनाशकटसंहारिणा हरिणा निजरोमकूपेभ्य एव स्वेच्छया समुत्पादितैर्वृकव्रातैः सर्वतोऽवरुद्धेषु गोकुलप्रवृद्धेषु नृपशुमुख्येषु गोपमुख्यो नन्दस्सत्वरं स्वकुलवृद्धैस्सह संमन्त्र्य व्रजमन्यतो नेतुकामः सपदि नभसः समुपस्थितेन नारदेन प्रतिपादितस्य बलकृष्णप्रभावामृतस्य पानेन व्यर्थीकृतवसुदेववचश्शुष्कपाथेयः तत्क्षणादेव तद्वनान्निर्गत्य निजाज्ञया सर्वतः प्रचलितैः घनपटलैरिव शकटघटघरट्टोलूखलैरिन्द्रचापघटिताभिस्तटिल्लताभिरिव विविधवस्त्रविचित्रिताभिर्गोपवनिताभिः तरङ्गान्तरेभ्य इव गोपरम्परान्तरेभ्यो मुहुर्मुहुस्सखेलमुत्पतद्भिः सलिलकणैरिव सकलगोवत्सगणैः तिमितिमिङ्गिलैरिव

निखिलगोपाले रतिरमणीयं सुमुद्रमिव स्वघोषं प्रकर्षन् यमुनातटघटितविविधवनवीथिकापराजितपुरन्दरनन्दने अनतिदूरगोवर्धने अक्षीणतृणकाष्ठजीवने सकलपशुवृन्दावने वृन्दावने निवेशयामास ॥ १ ॥

तृणसलिलसमृद्धे तत्र वृन्दावने तौ
प्रमुदितपशुवृन्दं चेरतुश्चारयन्तौ ।
शुकपिकरमणीयैश्चूतपुन्नागजाती-
सरलवकुलनीपैः शोभिते रामकृष्णौ ॥ १८ ॥

वातैश्शोषितवापिको दवशिखिज्वालावलीढाचलः
सन्तापैर्महिपापमृत्युरबलावक्षोजविक्षोभदः ।
अन्वीकृत्य तुरङ्गमानपि रवेर्वेगं रजोभिर्हरन्
निद्रालस्यनिदानमूर्तिरवनौ जज्ञे निदाघो महान् ॥ १९ ॥

अथ भुवि दिवि घर्मे वर्धमाने व्रजस्थाः
जनितविविधरोगाः भानुजा वायुनासन् ।
नवविवरसृतासृक्चर्चितास्तेऽप्यभूवन्
द्विजमृगपशुसङ्घा ये तु वृन्दावनस्थाः ॥ २० ॥

ग—तदनु वृद्धगोपालपण्डितैः शास्त्रसम्मतैर्मन्त्रभैषजादिभिरप्यपरिहार्यविक्रमैर्विविधव्याधिसङ्घैर्गतागतप्राणेष्वाबालस्थविरमखिलगोपगणेषु निष्पन्देषु च निखिलपशुवृन्देषु तमोमुकुलितेषु नीरजेषु मल्लिकाक्षयोरिवाक्षीणतेजसोर्बलकृष्णयोरप्यविदितमूलयोरिव स्थितयोः कोऽपि गोत्रजभाग्यशेष इव सहसा विदेहादागतो गोपालवर्यस्त्यक्तधैर्यानेतान् समीक्ष्य सधैर्यं स्फुटमवादीत् ॥ २ ॥

ग—भोभो गोपालवर्याः अलमलमिह मन्त्रतन्त्रौषधैः कैलासनिलयः पशुपतिरेव परा गतिः पशुपालकानामस्माकं द्विजमुखेन द्विजराजशेखरं तमेव सस्वरं सम्पूज्य शरणमाव्रजत स ह्यपारव्याधिचिन्ताकूपारतारको भवतां भविष्यतीति ॥ ३ ॥

ग—तदनु तेष्वपि शिपिविष्टपूजानिविष्टान् द्विजशिष्टानाहूय सम्प्रार्थयत्सु तैर्द्विजैः क्वचन देवायतने शिवं संस्थाप्य सप्ताहोरात्रमस्खलितं प्रवर्तितैः पूजोपचारवर्णनैः विविधवाद्यनर्तनैः तोषितेन रजताचलनिकेतनेन सदयं सम्प्रेषितश्शङ्कुकर्णो नाम कश्चिद्भूतगणप्रविष्टः कस्मिंश्चिद्वेदविदि विप्रे कृतावेशो गोपान् विस्मापयन् वारिदस्तनितगम्भीरं वामदेवनिदेशमेवं प्रकाशयामास ॥ ४ ॥

सञ्जातो द्वापरान्ते कलिरिह यमुनातीरभूमौ कपित्थः
तत्कामिन्यश्च गावस्तदनुगनिकराः कण्टकोरुद्रुवल्ल्यः ।
तत्पुत्रा वत्सभूताः फलसुमसमयः साम्प्रतं द्वादशाब्दात्
तद्वृक्षाणां विषोग्रैर्व्रजमखिलमभून्मूर्छितं तिग्मगन्धैः ॥ २१ ॥

छेत्तारौ तद्विषद्रुव्रततिपशुततेर्द्वाविमौ रामकृष्णौ
भेत्तारौ सर्वरक्षःप्रवरशिखरिणां वो गतिर्नेतरोऽस्ति ।
आहैवं शूलपाणिर्गिरमुरुकृपया भक्तितुष्टोऽद्य गोपाः
तां वक्तुं तद्गिरा वस्सविधमुपगतश्शङ्कुकर्णोऽहमस्मि ॥ २२ ॥

ग—एवं चन्द्रशेखरगिरमाकर्ण्य यदुवंशशेखरः सङ्कर्षणेन सह निर्गत्य कतिपयगोपकुमारैरनुगतो यमुनातटं प्रविश्य तत्र सुरेन्द्रकेतुवत्समुच्छ्रित-

मत्यन्तपरिणाहमतिक्षारकटुगन्धदुस्सहं कपित्थभूरुहमासाद्य सहुंभारवमासादितेषु गोबृन्देषु बलभद्रेण काष्ठपाषाणगणविक्षेपणैर्दिशो दश विद्रावितेष्वपि तद्वत्सगणैः खरतरखुरविषाणकोटिकुट्टनैर्विद्रावितेषु निखिलगोपकुमारेषु स्वयमनुद्विग्न एवैकैकशः पदे प्रगृह्य निभृतमाविद्धय वियति सुविसृष्टैरप्यसुविसृष्टैस्तैरेव तत्तरुमखिलमधः पातयित्वा तमपि तरुवरं तत्परिवारतरुभिस्तदन्तरलतागुल्मैश्च सह निजकरकुठारविहारेण शकलीकृतं तदखिलं समूलमनलसास्कृत्य तत्कर्मणाऽतिहृष्टैर्गगननिविष्टैस्सुरैस्समस्तथं सदुन्दुभिनिनदं कल्पद्रुमकुसुमसमूहैः कीर्यमाणः गोपालकैस्सह यमुनां प्रविश्य निर्वर्तितविविधजलविहारो गोपदारोपहृतं विविधमन्नमश्नन् आसाद्यं विश्रम्य ततो निर्गतः पथि सभ्रूविजृम्भहासनर्तनमाननप्रवर्तितैः पटहवेणुवीणादिवाद्यरवैरनिमिषानप्यानन्दयन् निजनिवासमाससाद ॥ ९ ॥

इति विपतरुदाहध्वंसिताशेषदोषे
शुभगुणरमणीये तत्र बृन्दावनान्ते ।
सुखमखिलनिदाघं रौहिणेयेन साकं
चिरमरमत कृष्णश्चारयन् गोसमूहम् ॥ २३ ॥

अथ भुवि घनकालः प्रादुरासीद्यदा भूः
नवसलिलसुवृष्टा शोभिता रम्यगन्धैः ।
स्फुटकुटजकदम्बैर्वासिता सिन्धुहारा
मदशिखिकलगीर्भिः गायतीवाब्जनाभम् ॥ २४ ॥

साटोपं वलयीकृतेन्द्रधनुषा सोद्गर्जितज्यारवं
वेगात्तेन विदिक्षु दिक्षु किरता विद्युत्स्फुलिङ्गावलीः ।

प्रावृट्कालमहारथेन महसा घर्माभियातिर्भृशं
भग्नोऽप्यच्युतभाग्य एव स यतो लीनस्स्तने योषिताम् ॥ २९ ॥

ग—एवं मयूरसमुदयमहोदयं घनोदयं समीक्ष्य सङ्कर्षणस्सहर्षमनुज-मिदमभाषत ॥ ६ ॥

त्वत्कीर्तिविक्रमजितौ दिवि चन्द्रसूर्यौ
युक्तं ह्रिया विचरतो मुहुरभ्रलीनौ ।
कान्त्या जितोऽपि मलिनोऽम्बुद एव तेऽग्रे
कृष्ण प्रसर्पति मुहुर्धिगिमं विलज्जम् ॥ २६ ॥

विद्युदङ्कुशविद्धस्य सोग्रस्तानितवींकृतम् ।
धाराशुण्डाप्रसारोऽयमाभाति घनहस्तिनः ॥ २७ ॥

इत्यादिबलभद्रस्य भाषितं भावभूषितम् ।
शृण्वन्नेव स दाशार्हस्सुखं बृन्दावनेऽवसत् ॥ २८ ॥

अथ पुरि मिथिलायां कुम्भको नाम गोपः
कुवृषमदनहेतोर्नन्दजायानुजन्मा ।
व्यसृजदतुलबुद्धिर्नन्दगोपाय दूतं
शुभगिरमभितो द्राग्घोषयापास चैवम् ॥ २९ ॥

भोभो गोपाः सुदुष्टैर्निशिचरचरितैर्भूपकोपास्पदानां
सप्तानामेतदक्ष्णां प्रभवति दमने यस्त्विदानीं बलिष्ठः ।
तस्य ग्रीवाविभूषा भवति नहि मृषा कुम्भकस्यात्मजैषा
नीला लावण्यहेलाविहसितचपला चारुतारुण्यलीला ॥ ३० ॥

ग—अथ नन्दगोपोऽपि दूतमुखेन विदितनीलास्वयंवरः निखिलगोपगोपिकाभिस्सह स्वव्रजान्निर्गत्य मध्येमार्गमारचितविविधकलभलीलाभ्यां वत्सगणसंवृताभ्यां बलदामोदराभ्यां तोषितारवण्डलमुखबर्हिर्मुखमण्डलो दिङ्मण्डलात्स्वयंवरागतैस्सरण्डकुण्डलैः गोपालमण्डलैरतिनिबिडीकृतेन राजमार्गेण महाराज्ञातिपुत्रकेण कुम्भकेन यथायोग्यमभ्युद्गतो विबुधजनवर्णनीयरामणीयकाद्यखिलगुणगणैरशिथिलां मिथिलामाविवेश ॥७॥

तत्र यथोचितं संमानितेन नन्दगोपेन सह सदसि संनिविष्टस्य स्वजनकस्य कुम्भकस्याज्ञया श्रीदामनाम्ना निजपूर्वजेन सभान्तरमुपनीतां सदाचारेषु मात्रा धर्मदयेव यौवनविलासेषु लज्जयातीव विनीतां प्रत्यङ्गसौष्ठवसंसूचितपरमेष्ठिसृष्टिचातुर्यविशेषां धृतविविधविवाहवेषां शचीमिव सहस्राक्षलालनीयां श्रियमिव मन्मथोत्पादनशीलां नीलां विलोक्य विषमशरशरोर्मिभिरिव कुम्भकोक्तिभिः प्रोत्साहितानां सप्तमहोक्षसमक्षमासादितानां केषु चिद्धीरेषु तदीयहुंभारवश्रवणविगलितेन धैर्येण गलदुदकुम्भायितेषु, कतिपयवीरेषु निजकटिगिरिकूटेषु खरतरखुरैराचरितशतकोटिविभ्रमाणां तेषां दशगुणं प्रतिकर्तुमिव विषाणकोटिषु यावच्छरीरैर्विहितसहस्रकोटिविभ्रमेषु, अवशिष्टेष्वपि रजोन्धकारानिर्लज्जसुलभपलायनेषु सस्मितं नन्दनन्दनो रोहिणीनन्दनमिदमभाषत ॥८॥

कालनेमिसुता ह्येते मां हन्तुमिह सङ्गताः ।
निहन्तव्या मया राम गोपालान् रक्षता वृषाः ॥ ३० ॥

ग—एवं सङ्कर्षणेन सह संमन्त्र्य सङ्कर्षणानुजो भगवान् समिति सन्नद्धमात्मानं जिघांसया युगपदापतितेभ्यस्तेभ्यस्सप्तभ्यो महावृषेभ्यस्तदीयस्तुपदास्यविषाणकोणाभिनयमनोहरसमरदेशीयलास्यानुरूपमुरूपारितोषिकं प्रदातु-

काम इव पृथक्पृथु भूनिजपृथुमुष्टिवितीर्णविलक्षणमोक्षः स्वपितृसमक्षमखिलगोपालकुलमाह्लादयन् आत्तमूर्तिमात्मकीर्तिमिव प्रकृतिनिर्मलं नीलं सत्वरं प्रत्यग्रहीत् ॥ ९ ॥

तदनु नन्दः स्वमम्त्रन्विना कुम्भकेन सुतार्थं समर्पितं बहुगोधनं स्वसुतोदयप्रवर्धितगोसमृद्धिप्रशंसनेन तस्मिन्नेव प्रत्यर्प्य तदनुमतस्सबलनीलमात्मजं पुरोधाय सदारज्ञातिबान्धवसुहृद्व्रजः स्वव्रजमाजगाम ॥ १० ॥

ततः—

वर्षापाये निर्मलव्योमतोये
छायाकान्ते तत्र बृन्दावनान्ते ॥
रेमे मित्रैरन्वितो गोपपुत्रैः
पश्यन् देवः पादपान् वासुदेवः ॥ ३१ ॥

छायामण्डलशाम्यदातपकथः शाखाशिखासम्भवद्विप्रौघोऽखिलशाखिनामधिपतिश्चेतोहरोऽथो वने ।
बृन्दं चारयतो गवां निजसखैः भाण्डीरनामा महान्
न्यग्रोधोऽग्रजसंयुतस्य नृहरेः क्रीडावरोधोऽजनि ॥ ३२ ॥

ग—तत्र कदाचिद्गोपालदारकैः सह विरचितबहुविहारयोः रौहिणेयनन्दकुमारयोः दिग्यात्रार्थमिव तीर्थयात्रार्थं नभोमध्यमिव वनमध्यमध्वना गतावहस्करादिव वसुधा कृशावपि तेजसा अकृशौ वामदेवभरद्वाजौ यमुनामार्गप्रदर्शनमात्रमाकाङ्क्षमाणौ हरिमुपससर्पतुः ॥ ११ ॥

ततस्ताविदं फलद्वयं दध्योदनमेतच्च पायसादिकं गृह्यतामयमहं नन्दनन्दनः कृष्णोऽसौ मदग्रजो राम इत्यादरवचोभिराराधयन्तमतिविनयं तं

साग्रजं शक्रावरजं समीक्ष्य काविमाविति सपदि समासादितसमाधियोगसाक्षा-
त्कृतभगवदवतारमहिमानौ सानन्दाश्रुपुलकगद्गदमिदमवादिषाताम् ॥ १२ ॥

त्वमादिर्विश्वस्य त्वमसि निखिलं त्वद्गतमिदं
त्वमीशस्सर्वेषामजित परिपूर्णोऽसि नृहरे ।
अनन्तैर्मत्स्याद्यैर्भुवनमवतारैरवसि भो
विभो हन्तुं दस्यूनिह यदुकुलं प्राप्य चरसि ॥ ३३ ॥

नमस्तस्मै तुभ्यं निटिलगतनीलालकरुचे
सरोजाक्षायोरस्स्फुरितवनमालाय नृहरे ।
कृपापारावार प्रबलतपसा दुर्लभमिदं
वपुस्ते पश्यन्तस्सततमिह धन्या हि पशुपाः ॥ ३४ ॥

ग-—एवं विहितविविधविष्णुसंस्तवयोस्तयोर्मुनिपुङ्गवयोस्तीर्थनिषेव-
णाय तद्वनान्निष्क्रान्तयोर्गोपाला अपि गोद्विजसुरनिकरहृद्यैर्विचित्रवाद्यैरत्यद्भुतै-
र्गीतैश्च यथाय... योगिध्येयचरणमपारकरुणमेनमाराधयामासुः ॥ १३ ॥

अथ कदाचिदतुलसालरसालतालहिन्तालतमालकृतमालतिलकामलक-
वकुलवञ्जुलकुरवकतिलकमुचुकुन्दकोलाङ्कोलादिविविधतरुनिवहनिबिडोभयतटमध्य-
विहारिणीं सकलजनमनोहारिणीं शुभसलिलविहाररससततासक्तसिद्धाङ्गनास्तन-
तटविस्रस्तकुङ्कुमक्षोदकलिपतोत्तुङ्गतिलकां भ्रमदभ्रमरबृन्दालकां अतिनिबिड-
नीलशैवालवेणीं विविधसंचलन्मीननेत्रस्फुरत्कुलपाथोजवदनां दरव्यक्तफेनरदनां
मुहुर्मुहुर्हंसगारवमलदुकूलाञ्चलाच्छादितमानकुमुदकुड्मलपयोधरां अभिनववयः-
श्रीधरां वियत्तलसमानावलग्नभासमानावर्तनाभिकुहरां मृदुतरङ्गावलीमनोहरां

घनपुलिनजघनश्रोणि मण्डलोद्भासिराकासुधाकरकिरणमञ्जरीप्रकाशकाशपुष्पाव-लीवसनां विष्वक्प्रकीर्णविविधसुमवासनां कलक्वणितरुचिरकलहंसविराजमान-पद्मचरणां अघौघहरणसंस्मरणां यादःपतियोषां यमुनां अखिलजगद्दुरितदूरी-करणनिपुणप्रणामेनात्मना नोपेक्षणीयं कालियगरलजनितमात्मजाहृदयसङ्कट-मिति तत्परिहरणेच्छयाऽऽगतो रविरिव हरिर्गोसहस्रैरुपससार ॥ १४ ॥

तत्र गाश्चारयन्नेव चचार हरिरव्ययः ।
कुर्वन् पद्भ्यां महीं धन्यां दृशा सर्वांश्च तद्भवान् ॥१९॥

ग—स हरिरेकदा सकलसलिलाशयावसथविविधविहङ्गवर्जितं जित-प्रलयकालानलगरलकीलिकीलावरणदुस्तरं तरङ्गनिकरदुर्गतापेयतोयच्छायाप-राजितवियत्तलं तलविचरदुरगदम्पतिचटुलविहारसंसूचकतरलपृथुलबुद्बुदोपपन्नं पन्नगाशनभयत्यक्तपाथोधिनिलयकालीयफणिवरशरणप्रदं निकषैकयोजनमुरुत-रारण्यभीकरेषु तीरेष्वपि दुरासदं यामुनह्रदमुपसृत्य महीधरशिखरलम्बमाननी-लाम्बुदनिकरमपहसन्निव तत्तटघटितकदम्बभूरुहशिखरमधिरुह्य तस्मात्स्वविग्र-हसुषमाविशेषतस्करोभयपुष्करोदरं विग्रहव्यापारेणैव क्रमेण निर्भेत्तुकामइव निबद्धपरिकरो गगनतलमुत्पत्य मध्येसलिलमशनिरिव निपपात ॥ १९ ॥

उदपतदतिवेगतोऽभ्रमम्भो
विशति हरौ चकितं रवौ रवैस्तत् ।
निजपितरि निवेदनाय नूनं
न्यपतदमुं शरणं पुनर्विचिन्त्य ॥ २१ ॥

ग—तदानीमखिलजगदवनबद्धादरो दामोदरो ह्रदपयसि निपति-तनिजतनुवज्रनिर्घातघोषश्रवणकुपितेन तत्क्षणाद्बिलसदनमपहाय बहिर्निर्गतेः

निखिलबिलनिशान्तनिस्सरत्सरीसृपसहस्रसंसेवितपार्श्वयुगलेन, निर्गमनसमय-संक्षोभितसलिलकल्लोलकञ्चुकितकुल्याप्रतिनिर्वर्तितकालिन्दजामहौघेन अतितरल-भीकरतारकारसनानयनाननावलीसमुल्लसद्रोषविषानलज्वालेन भस्मीकृततटनि-कटविटपिसञ्चयेन कालीयमहाफणिना सहजबलदंशितेष्वङ्गेषु आत्तदशनभङ्ग-तया द्विगुणितरोषयोगेन भोगेन परिवेष्टितो नभसि घनपटलनिगीर्णनी-लाचलशिखिरलीलां निमिषमापुपोष ॥ १६ ॥

शय्या शेषभोगी गृहं च जलधिः जाया विषस्यानुजा
यस्याभूत्सततं यदाश्रयबलात् क्ष्वेलं हरश्चापिबत् ।
तस्मिन् सर्वचराचरात्मनि हरौ व्यालस्य तत्साहसं
चित्तं चित्रपयोनिधौ क्षिपति मे यद्भोगदन्तैः कृतम् ॥ ३७ ॥

ग—एवमक्षीणमहिमसमाविति भगवति भोगिबन्धमुपगतवति सति ॥ १७ ॥

भोगिभोगसुखस्पर्शमिच्छन्निव हरिर्विभौ ।
तदपूर्वतनुस्पर्शसुखेच्छुरिव चाहिराट् ॥ ३८ ॥

ग—तदनु केन चिद्गोपालकेन सभयकम्पमभिहितं हृदयं तुदन्तं त-न्निमग्नवृत्तमाकर्ण्य त्वरितमाबालस्थविरं व्रजादापतितैर्नन्दादिनिखिलगोपगोपी-गणैरतिनिबिडे ह्रदतटे तादृशीं दशामापन्नमात्मानमालोकयतां तेषां करुणमु-त्थितैर्विलपितरवैरापूरिते च दिगन्तरे नभोन्तरे च किमिदमिति सपदि मिल-दुदकभयभयशिवशासमखमुखसकलसुरनिकरदन्तुरे ' कृष्ण बलिदमन दमय फणि-राजमेनं; कुरुकुल गमय शोकजलधिविलीनं दीनं जनमिमम् ' इति कल-देवसूक्तिसुधयाऽभिवृष्टो हृष्टो भक्तजनभवबन्धभञ्जनो भगवान् स्वबलशिथिलि-तादहिबन्धनाद्बहिर्निर्गत्य करतलकलितभोग एव सन् तस्य फणामण्डले अखि-

लसुरनरपशुमण्डलं संप्रहर्षयन् प्रावृषि वृषनीलमणिमयप्रासादान्तरात्तच्छिखर-
मधिरूढो मयूर इव चरणयुगलेन सुचिरमाननर्त ॥१८॥

जगति विविधभेदः कल्पितो येन लास्ये
स विधिरिदमुदीक्ष्य स्वेच्छया संप्रवृत्तैः ।
सहितममरवाद्यैरद्भुताब्धौ निमग्नः
तदिह दिवि च लास्यं वर्णयेत्को नु विष्णोः ॥३९॥

इति हरिचरणाभ्यां भुग्नशीर्षो भुजङ्गः
पयसि रुधिरधारा उद्गिरन् पञ्चवक्त्रया ।
अतिमृदुगिरमेवं प्राह देवं प्रयत्ना-
त्कृतनतिरतिदीनः शोच्यरूपोऽप्ययरूपम् ॥४०॥

श्रीश प्रसीद करुणार्णव जीविते मे
तच्च क्षमस्व यदकारि मयाऽधुनाऽऽगः ।
त्वामेव यामि शरणं वद किं करोमि
कृष्ण क यामि जलधौ गरुडाद्बिभेमि ॥४१॥

फणिफणितिमिमां निशम्य शीर्ष-
स्फुरितपदं तमिदं जगाद शौरिः ।
व्रज निजपरिवारसंयुतो द्रा-
ग्जलधिमितो हि रिपो नैतेऽस्ति भीतिः ॥४२॥

ग—तदनु तथेत्यन्तर्हिते तस्मिन्नहिपतौ वनविपदो विमुक्तमुडुपति-
मिव तं समागतमच्युतं वीक्ष्य नन्दमानन्दपरवशं प्रशस्य गोपाः ताभ्यामद्भु-
तानन्दाभ्यां सह समेताः सर्वे स्वघोषमुपजग्मुः ॥१९॥

अथ कदाचिद्गोभिस्सह गोवर्धनगिरिपरिसरमनुसरन्तौ वृषपोताविव स्वच्छन्दमितस्ततो विचरन्तौ रामकृष्णौ स्वर्धुनीजनितपद्मिनीकर्षणकुतूहलादूर्ध्वं प्रसारितकरैः करिनिकरैरिव पर्वसु फलाग्रेषु च कालैस्तालैर्निबिडं किमपि महद्वनमद्राष्टाम् ॥ २० ॥

अथ घ्राणहारिणा तत्फलगन्धेन सन्निरुद्ध इव सङ्कर्षणो दामोदरगिरा तत्तरून् प्रकम्पयन् तेभ्यः पक्वानि कतिचित्फलानि पातयामास ॥ २१ ॥

तद्रवश्रवणादेव दैत्यो बलमुपाद्रवत् ।
तद्वनारक्षकः कोऽपि व्यात्तानन इवान्तकः ॥ ४३ ॥

रोषेण स खराकारो बलस्योरसि धेनुकः ।
दशनैरदशत्पद्भ्यां पश्चिमाभ्यामथाप्यहन् ॥ ४४ ॥

ग—अथ तच्चरणयुगलनिगलीभूताङ्गुलिनिकरेण निजकरेण रुषितेन रौहिणीयेन रथचरणविभ्रमेण सम्भ्रमेण तत्तरूपरि परित्यक्तस्सबलतेजश्शमनमगतो दैत्यस्त्यक्तासुरवनौ निपतन् सहपतितैस्तत्तालफलैरमुष्य क्रोधमेव शमयामास ॥ २२ ॥

अथ तज्ज्ञातिष्वपि तद्गतिमुपगतेषु,
चित्रं सधेनुकमभाद्विधेनुकमपि क्षणात् ।
सफलं विफलं चोग्रैस्तद्वनं गोपविक्रमैः ॥ ४५ ॥

ग—ततो बलरामाच्युतावनुचरैर्गोभिश्च सह ततो निर्गत्य शशिविवस्वन्ताविव दिशो दश विद्योतयन्तौ वसनशोभयाऽञ्जनकनकपर्वताविव स्वा-

अथविपिनमतीव शोभयन्तौ सप्रतिनिनदमुच्चैः क्ष्वेलन्तौ मुहुर्मुहुर्नामभिर्गास्समाह्वयन्तौ श्रवणामृतानि गीतानि असकृदुद्गायन्तौ अमानुषावपि मानुषदीक्षया वयस्यैस्सह वन्यवेषेण विरचितविचित्रविहारौ क्वचिदप्यपराजितावेव पुनरपि बहुलच्छायं भाण्डीरं नाम बहुविटपसङ्कटितसकलदिग्रोधं न्यग्रोधमासेदतुः ॥ १३ ॥

प्रलम्बो नाम दैत्यो ऽगाच्छिद्रान्वेषी तयोस्तदा ।
गोपालवेषमास्थाय वन्यपुष्पविभूषितः ॥ ४६ ॥

ग—तत्र चान्दोलिकाभिः युद्धमार्गैश्च सुचिरं विहृत्य द्वन्द्वक्रीडापरायणेषु गोपेषु क्रीडाजितेन श्रीदामनाम्ना गोपेन सन्धार्यमाणे गोविन्दे बलोपि प्रलम्बेन सह विक्रीडमानः जितेन तेन सत्वरमुद्धूयमानः कुटिलधिया ह्रियमाणः घनमिव वर्धमानं पवनमिव पलायमानं दारुणाकृतिं तमवलोक्य तच्चरितं सन्दिहानः स्वानुजगिरा स्मारितामात्मावेशकलितशेषतामात्मनि सञ्चिन्तयन् प्रवर्धमानबलपौरुषः परुषतरेण निजमुष्टिना शिरसि प्रहृत्य तमरिं यमसदनमुपनीय यथास्थानमाजगाम ॥ १४ ॥

बलेन निहते तस्मिन् प्रलम्बे दिवि दैवतैः ।
बलदेवेति नामास्य श्रावितं तज्जना विदुः ॥ ४७ ॥

इति श्रीहरिवंशचम्पौ द्वितीयो विलासः समाप्तः



## ॥ अथ तृतीयो विलासः ॥

अथ कदाचित्कवलितगगनाङ्गणेषु ज्योतिषां गणेषु विमलसलिलाशयावतंसेषु राजहंसेषु मत्तमधुकरमुखरेषु वनरुहनिकरेषु अलङ्कृतनिखिलवनमण्डलीमण्डितमहीमण्डलेषु गोवृषमण्डलेषु च कामपि श्रियमुत्पादयन्त्यां शरदि कुलक्रमागतशतमखमखारम्भसंरम्भिणो गोपवृद्धानुदीक्ष्य नन्दसूनुरिदमवादीत् ॥ १ ॥

सत्यं वक्ष्ये शृणुत सुमतं ब्राह्मणा मन्त्रयज्ञाः
सीतायज्ञा जगति कथिताः कर्षकास्तद्वदेव ।
गोक्षेमार्थं वनभुवि वयं धेनुपा गोत्रयज्ञा
इज्योऽस्माभिर्गिरिरिह सुरैरिज्यतां वासवोऽपि ॥ १ ॥

ग—एतदाकर्ण्य तथेति तद्गिरमभिनन्द्य नन्दादिगोपवृन्दैः सगोवृन्दैः गोवर्धनगिरिमुपेत्य तत्र कुत्रचित्स्वच्छोदसरित्परिसरे विरचितातुल्यघृतदधिमधुपयःकुल्योपशोभितसव्यञ्जनमांसभक्ष्यान्नभूधरैः गिरियज्ञे प्रवर्तिते संतृप्ते च सकलगोद्विजमण्डले हरिः स्वयं गिरीभूय स्वीकृतगिरियज्ञः सभयभक्तिकम्पमात्मना गोपवृन्देन च वन्दितो गिरिस्थ एव गिरमेवमम्बुधरगम्भीरं व्याजहार ॥ २ ॥

इतःप्रभृति भो गोपाः गोष्वस्ति यदि वो दया ।
एवमेव मम प्रीत्यै वने यज्ञः प्रवर्त्यताम् ॥ २ ॥

ग—एवं निर्वर्तितगिरियज्ञेषु गोपेषु व्रजमुपगतेषु निजमखभङ्गेन सञ्जातमन्युना शतमन्युना सञ्चोदितेषु संवर्तकाख्यतोयदमहायोधेषु चलत-

अथविपिनमतीव शोभयन्तौ सप्रतिनिनदमुच्चैः क्ष्वेलन्तौ मुहुर्मुहुर्नामभिर्गास्समाह्वयन्तौ श्रवणामृतानि गीतानि असकृदुद्गायन्तौ अमानुषावपि मानुषदीक्षया वयस्यैस्सह वन्यवेषेण विरचितविचित्रविहारौ क्वचिदप्यपराजितावेव पुनरपि बहुलच्छायं भाण्डीरं नाम बहुविटपसङ्घटितसकलदिग्रोधं न्यग्रोधमासेदतुः ॥ २३ ॥

प्रलम्बो नाम दैत्यो ऽगाच्छिद्रान्वेषी तयोस्तदा ।
गोपालवेषमास्थाय वन्यपुष्पविभूषितः ॥ ४६ ॥

ग—तत्र चान्दोलिकाभिः युद्धमार्गैश्च सुचिरं विहृत्य द्वन्द्वक्रीडापरायणेषु गोपेषु क्रीडाजितेन श्रीदामनाम्ना गोपेन सन्धार्यमाणे गोविन्दे बलोपि प्रलम्बेन सह विक्रीडमानः जितेन तेन सत्वरमुदूह्यमानः कुटिलधिया ह्रियमाणः घनमिव वर्धमानं पवनमिव पलायमानं दारुणाकृतिं तमवलोक्य तच्चरितं सन्दिहानः स्वानुजगिरा स्मारितामात्मावेशकलितशेषतामात्मनि सञ्चिन्तयन् प्रवर्धमानबलपौरुषः परुषतरेण निजमुष्टिना शिरसि प्रहृत्य तमरिं यमसदनमुपनीय यथास्थानमाजगाम ॥ २४ ॥

बलेन निहते तस्मिन् प्रलम्बे दिवि दैवतैः ।
बलदेवेति नामास्य श्रावितं तज्जना विदुः ॥ ४७ ॥

इति श्रीहरिवंशचम्पौ द्वितीयो विलासः समाप्तः



# ॥ अथ तृतीयो विलासः ॥

अथ कदाचित्कवलितगगनाङ्गणेषु ज्योतिषां गणेषु विमलसलिलाशयावतंसेषु राजहंसेषु मत्तमधुकरमुखरेषु वनरुहनिकरेषु अलङ्कृतनिखिलवनमण्डलीमण्डितमहीमण्डलेषु गोवृषमण्डलेषु च कामपि श्रियमुत्पादयन्त्यां शरदि कुलक्रमागतशतमखमखारम्भसंरम्भिणो गोपवृद्धानुदीक्ष्य नन्दसूनुरिदमवादीत् ॥ १ ॥

सत्यं वक्ष्ये शृणुत सुमतं ब्राह्मणा मन्त्रयज्ञाः
सीतायज्ञा जगति कथिताः कर्षकास्तद्वदेव ।
गोक्षेमार्थं वनभुवि वयं धेनुपा गोत्रयज्ञा
इज्योऽस्माभिर्गिरिरिह सुरैरिज्यतां वासवोऽपि ॥ १ ॥

ग—एतदाकर्ण्य तथेति तद्गिरमभिनन्द्य नन्दादिगोपवृन्दैः सगोवृन्दैः गोवर्धनगिरिमुपेत्य तत्र कुत्रचित्स्वच्छोदसरित्परिसरे विरचितातुल्यघृतदधिमधुरसःकुल्योपशोभितसव्यञ्जनमांसभक्षान्नभूधरैः गिरियज्ञे प्रवर्तिते संतृप्ते च सकलगोद्विजमण्डले हरिः स्वयं गिरीभूय स्वीकृतगिरियज्ञः सभयभक्तिकम्पमात्मना गोपवृन्देन च वन्दितो गिरिस्थ एव गिरमेवमम्बुधरगम्भीरं व्याजहार ॥ २ ॥

इतःप्रभृति भो गोपाः गोष्वस्ति यदि वो दया ।
एवमेव मम प्रीत्यै वने यज्ञः प्रवर्त्यताम् ॥ २ ॥

ग—एवं निर्वर्तितगिरियज्ञेषु गोपेषु व्रजमुपगतेषु निजमखभङ्गेन सञ्जातमन्युना शतमन्युना सञ्चोदितेषु संवर्तकाख्यतोयदमहायोधेषु चलत्-

टिदसिलतावितानेन वलयितेन्द्रचापेन च दिङ्मण्डलमुपरुध्य विनदत्सु तत्सलिलधारामुसलवृष्टिमसहमानेषु गोगणेषु दिशि दिशि चक्षुषी विक्षिपत्सु गोपेषु च समुत्पन्ननिधनकम्पेषु व्रजविपदमुद्वीक्ष्य जनार्दनो गोवर्धनगिरिमशनिशतनिपातनिष्ठुरारवमुत्पाट्य विचलितविविधविहगमृगव्यालपादपममुमसदृशनिजभुजस्तम्भाग्रमारोप्य निरुद्धमहोग्रवर्षस्सकलमपि व्रजौकसां गणं तद्गिरिगुहान्तरविहारिणं विधाय त्रिदशपतिमाश्चर्यनीरधौ निमज्जयामास ॥ ३ ॥

अथ वितथीकृतप्रतिज्ञो विबुधपतिः सप्तरात्रात्परं स्मारितनिजावरजमनुजावतारो विरचितवारिदनिवारणो निजवारणेन वासुदेवदिदृक्षया महीतलमुपगम्य वर्षापगममुद्वीक्ष्य गुहातलाद्बहिर्निर्गतेषु निखिलगोगोपवृन्देषु गोवर्धनमपि यथास्थानमुपनीय तत्र कञ्चन शिलातलेऽन्तर्हितताक्ष्यपक्षातपत्रमूले सुखोपविष्टं विष्टरश्रवसमुपगम्य तद्दर्शनेन निजनयनसहस्रमपि सार्थीकुर्वन् सविनयमिदमवादीत् ॥ ४ ॥

त्वमादिर्विश्वस्य त्वमसि विबुधानां परिवृढः
समग्रं त्वत्तेजश्चरिमतिदिवं विजयते ।
त्वया त्राता गावः सपदि गिरिमुद्धृत्य नृहरे
क्षमाब्धे क्षन्तव्यस्त्विह मदपराधोऽपि कृपया ॥ ३ ॥

गवामिन्द्रोऽसि त्वं तदिह भवतो नाम जगृहे
विधिर्गोविन्देति प्रभुरसि ममोपर्यपि गवाम् ।
अतः प्राहोपेन्द्रेत्यपि स दिवि गोभिः परिवृतः
पयःकुम्भैरभिस्तदलमभिषिक्तो भव विभो ॥ ४ ॥

ग—तदनु सङ्क्रन्दनो गोविन्दममुममन्दहर्षेणात्मना निजकरस्कन्धाश्रितकनककलशदुग्धधाराभिर्गोभिस्स्तनविस्रवत्क्षीरधाराभिरम्बुदनिकरैः भृशममृतधाराभिरपि कृताभिषेकममरवरवादित्रघोषमन्दीकरणनिपुणमहर्षिगणमन्त्रघोषमन्तुष्टमनिमिषनिकरकरनिर्मुक्तसुमनोभिवृष्टमभिष्टुत्य विष्टपानिष्टयोः केशिकंसयोः पिष्टीकरणमात्मांशस्यार्जुनस्य यशस्विगणगरिष्ठीकरणमपि स्वाभीष्टमिति निवेद्य दत्तेष्टवरस्तेनातिहृष्टस्त्रिविष्टपमाससाद ॥ १ ॥

तदाऽभिषिक्ते गोविन्दे सुतृप्तमभवज्जगत् ।
सुधारसैरिव जलैस्सिक्ते सस्यमिवाश्रये ॥ ५ ॥

ग—अथ विस्मयाविष्टहृदयैर्गोपसमुदयैरप्यभ्यर्चितोऽच्युतस्स तदमानुषकर्मभिस्समुत्पन्नसंशयतया स्वस्वरूपनिरूपणाय बहुशः प्रार्थयमानोऽनतान् कालान्तरे तद्भविष्यतीति गिरा निरुत्तरीचकार ॥ ६ ॥

हरिरथ यमुनायास्सैकतेषु स्वगीतैः
सपदि जनितमोहैर्गोपकन्यासमूहैः ।
रुचिरमणिविभूषश्चन्द्ररम्यासु रेमे
कपटमनुजवेषः शारदीषु क्षपासु ॥ ६ ॥

रेजे तदाऽग्रतो दृष्टं नाशयन्नुक्षरूपिणम् ।
गवामरिष्टं सोऽरिष्टमन्धकारमिवोडुराट् ॥ ७ ॥

ग—तदनु तदमानुषाश्चर्यचर्याश्रवणशङ्कितहृदयतया सङ्कुचितात्मप्रशंसः कंसः तं गोवर्धनधरं वर्धमानानलमिव संचिन्त्य स्वात्मानमाशारिपुमिव मन्यमानो मुहुर्मुहुर्देवर्षिवचनमनुस्मरन् वसुदेवमतिपरुषं सदसि बहुशो निर्भर्त्स्य निरुद्धाहिरिव निश्वसन् किमपि मनसि निधाय दानपतिम

द्वीक्ष्य सखे सत्वरं व्रजमुपेत्य भविष्यति धनुर्महो महानत्रेति निवेद्य नन्दादिगोपगणैस्सह युद्धविचक्षणौ कृष्णसङ्कर्षणाविहानयेति व्यादिदेश ॥ ७ ॥

वासुदेवेन मे मैत्री क्षेमायेति तदोदितम् ।
वचो व्यर्थ मभूत्कंसं प्राप्यबीजमिवोषरम् ॥ ८ ॥

ग—ततो दानपतिरपि कृष्णसंदर्शनकुतूहलेन जवजितविनतानन्दनेन स्यन्दनेन यथानियोगं निर्जगाम ॥ ८ ॥

तत्पूर्वमेवोपेन्द्रवधकाङ्क्षिणा भोजपतिना संप्रेषितः हरिरिव संरोषितः प्रेरितः केशिनामा हयदानवः बृन्दावनमुपसृत्य तत्र निजहग्गोचरान् रविसुतपुरं प्रेषयन् शवशकृन्मूत्रैस्तद्भुवं दूषयन् व्रजनिकटभुवमपि विशन् गोवृषान् विद्रावयन् गोपान् सन्त्रासयन् गोकुलशशिनं गोविन्दमुद्वीक्ष्य मण्डलगतेन तत्परिवेषमण्डलीभवन् सकेसरसटोत्कम्पमुत्पतन् प्लुतेन च फणिफणामण्डलीभवन् स्वास्यप्रसारिततद्भुजायस्तम्भजृम्भणेन सम्पादितदशनकम्पातस्संरुद्धकन्धरतया चलितपवनसञ्जाततनुकम्पतः सपदि भुवि निपतन् रुधिरमुद्वमन् लज्जयेव पुनरपुनरुत्थितिमेव गतिमाससाद ॥ ९ ॥

अथ हरिरपि गोपवृद्धैः परमादरेण समाश्लिष्टस्तत्कदनसन्दर्शिना नारदेन आभिष्टुत्य भविष्यदर्थानपि संसूच्य केशिहननात्केशवोऽसीति गोविन्दः स्वसदनमाससाद ॥ १० ॥

अथ रविरपराब्धिं प्राप सन्ध्यानुरक्तान्
कलकलरवरम्याः पक्षिणो नीडवृक्षान् ।
निबिडमृदुगणाः स्वं गोगणा गोष्ठमापुः
व्यधरपि च तमोऽर्घो गोपनःपोपमोऽभात् ॥ ९ ॥

व्रजमपि स तदैव क्रूरकंसोपकण्ठा-
द्यदुवृषवदनेन्दूल्कन्धरोऽक्रूर एत्य ।
वृषभिव सुनिषण्णं वीक्ष्य तं वत्समध्येऽ-
निमिषमक्रुत हर्षोत्फुल्लनिष्पन्दगात्रः ॥ १० ॥

ग—ततस्स पुनरानन्दाश्रुगद्गदेन वचसा एह्येहि तात यदुकुल-चन्द्रेति केशवमाह्वयन्नव्यक्तयौवनमेनमनिमिषदृष्ट्या विलोकयन् कृष्णेन तेन सह तज्जन्मकर्मणोर्वैचित्र्यं हृदि विचिन्तयन्नेव नन्दसदनमाससाद ॥ ११ ॥

तत्र तेन सादरमभ्यर्चितोऽक्रूरः कुलवृद्धैरुपेतं तं नन्दमभिनन्द्य वय-स्यैस्सह वार्षिकं करमादाय सत्वरमौग्रसेनिमालोकयितुमर्हसीति तदाज्ञां विज्ञाप्य सङ्कर्षणसङ्गं गोविन्दमवलोक्य भवद्भ्यामपि मधुरागमनमवश्य-मपेक्षणीयं भोजपतिनिष्ठुरवचनदावानलेन भवद्विरहानलेन च सततमपि सन्त-प्यमानयोर्मातापित्रोर्देवकीवसुदेवयोर्दैन्यमनुपेक्षणीयं राज्ञस्तत्र भविष्यद्धनु-र्महवैभवं च सम्प्रेक्षणीयमिति संबोध्य निश्चितानुगमनयोस्तयोस्तदुचिताः कथाः कथयन्नेव तां निशामनैषीत ॥ १२ ॥

ततः प्रतिसदनमितोऽत्र दधिमथनेन नवनीतेन्दुरुज्जननं भवतीति द्विजकलकलैर्विज्ञाय लज्जयेवापरगिरिकन्धरजुषि हीनरोचिषि हिमरोचिषि उदयगिरिजुषाऽरुणरोचिषा विगलिते च वियत्तमोबन्धे वल्लवयुवतिरत्यन्त-शिथिलधम्मिल्लमल्लिकायमानेषु तारकासमूहेषु मधुरां प्रति शकटसहस्रैः प्रस्थितेषु गोपेषु च श्वाफल्किरपि रथेन रामकृष्णाभ्यां सह निर्गतोऽध्वनि यमुनामुपागमत् ॥ १३ ॥

स पयसि यमुनायाः स्नानहेतोऽभिमज्जन्
बहुशिरसमनन्तं भोगिलोकेऽभिषिक्तम् ।
असितवसनमङ्के तस्य कृष्णं च दृष्ट्वा
कनकवसनमैच्छत्प्रष्टुमब्जायताक्षम् ॥ ११ ॥

उन्मज्ज्य स रथे चाप्सु निमज्ज्य च रसातले ।
दृष्ट्वा तौ विस्मयाविष्टचेतसाऽगाद्रथं पुनः ॥ १२ ॥

नागलोके किमाश्चर्यमिति पृष्टस्स शौरिणा ।
सस्मितं प्राह तं तत्र किमस्ति भवता विना ॥ १३ ॥

ग—ततस्सत्वरमक्रूरेण मधुरां प्रवेशितौ रामाच्युतौ रथादवरुह्य तत्पुरविलोकनाय राजमार्गं प्रविविशतुः ॥ १४ ॥

आलानमुक्तवरवारणतुल्यलीलौ
लीलानुरक्तरजतासितशैलशोभौ ।
अभ्रच्युतामलमहेन्दुरविप्रकाशा-
वाश्चर्यमापुरथ तौ प्रसमीक्ष्य पौराः ॥ १४ ॥

वासांसि तौ रजकमध्वनि याचमानौ
विद्धौ दुरुक्तिभिरमुष्य ततोऽच्युतेन ।
कोपानले शलभतां गमिते च तस्मिन्
चित्राणि तान्यवृणुतां बलिनौ यथेष्टम् ॥ १५ ॥

सूक्ष्माम्बराणि रुचिराण्यथ तौ दधानौ
माल्यापणं विविशतुर्वरमाल्यहेतोः ।

ताभ्यां प्रदाय गुणकाभिधमाल्यवृत्तिः

भक्त्यैव तच्छ्रियमवाप वरान्मुरारेः ॥ १६ ॥

ततः,

कृष्णस्य किञ्चिदनुलेपनदानमात्रा-

त्कुब्जाऽङ्गसौष्ठवमवाप तदर्पणीयम् ।

तस्यारविन्दनयनस्य करारविन्दे

लीलारविन्दनटनं निमिषं प्रपन्ना ॥ १७ ॥

भक्त्या महद्भवति साधनमल्पमात्रं

प्रीत्या फलं च वचसाऽर्पितमेव कृष्णे ।

तस्यास्तु तद्द्वयमपीह कृतं हि साक्षात्

का तत्र साधनफलाल्पमहत्त्वचर्चा ॥ १८ ॥

ग—तदनु तदनुलेपनपरिदिग्धविग्रहावेतौ मृदुपङ्कदिग्धौ मातङ्ग-जातरवनमहोक्षाविव क्वाप्यप्रतिहतप्रवेशनिर्गमौ क्रमेण राजसदनमुपगम्य राज्ञो महतीमायुधशालां प्रविश्य तत्पालसन्दर्शितं दिक्पालयशश्शशिग्रसन-मभिलषन्तं विधुन्तुदमिव विद्योतमानं कमपि महाक्षेपयुक्तं महान्तं चापमव-लोक्य त्रस्ताविव तथैव तस्थतुः ॥ १९ ॥

आदाय तद्धनुरथाशु हरिर्विनम्रं

ज्यारोपणाय विदधे स तदैव मध्ये ।

भग्नस्य तस्य करिराजकराब्जलग्न-

भग्नेक्षुदण्डसदृशीमदिशद्दशां च ॥ १९ ॥

ग—आयुधपालोऽपि तत्क्षणएव कंसाय तमुदन्तं व्यजिज्ञपत् ॥१६ अथ कंसोऽपि क्रोधभयचिन्तायत्तचित्तश्चाणूरमुष्टिकौ महामल्लावानाय्य रहसि तदिदमकथयत् ॥ १७ ॥

भवन्तौ नर्दन्तौ यदि समररङ्गक्षितिगतौ
न कोऽपि स्थातुं वा प्रभवति पुरस्ताद्धि युवयोः ।
अतः श्वो रङ्गेऽस्मिन् सपदि बलकृष्णौ सुबलिनौ
भवद्भ्यां हन्तव्यौ कथमपि ततस्स्यान्मम सुखम् ॥ १० ॥

ग—ततस्ताभ्यां तौ कियन्तौ हताविस्येवावगन्तव्या वित्यभिहितोऽपि कंसः पुनरपि हारितजीवनं महामात्रमाहूय तदिदमभाषत ॥ १८ ॥

नाहमल्पवीर्यादुग्रसेनात्सम्भूतस्तत एव मातापितृभ्यां सन्त्यक्तोऽपि स्वेनैव तेजसा स्थापितोऽस्मि; सम्प्रति पितरममुं परित्यज्य पुरमिमामयादवां विधाय सुखं विचरिष्यामि; पुरा खलु भगवान्नारदो मामाह कदाचिद्रजस्वलायां तव मातरि यामुने वने सखीभिस्सह विहरमाणायां मृगयागतः सौभपतिः द्रविळनामा दानवेन्द्रः तत्पतिरूपेण तां वञ्चयन् अथ निजरूपं प्रदर्श्य कंसो जनिष्यतीत्यभिधाय निर्गतस्ततो हि तव जनिरिति यत्तत्तथ्यमेव; त्वमपि वसुदेवसुतौ रङ्गद्वारप्रवेशयन् प्रेतपतिपुरं प्रवेशयन् कुवलयापीडनाम्ना कुञ्जरेण सह समाजद्वारमचिरादधितिष्ठेति ॥ १९ ॥

अन्येद्युरहमहमिकया आगच्छद्भिर्जनौघैः घनौघैः महार्णवइव आपूर्यमाणे महारङ्गे अन्तश्चरद्वलीकालिञ्जेषु भोजवृष्ण्यन्धकाम्भोजेषु प्रियमहोदयसमयमाकाङ्क्षमाणेषु आस्थानविन्यस्तमस्ताद्रिशिखरमिव समुन्नतं

सिंहासनमलङ्कुर्वाणे च राज्ञि रङ्गान्तरमाश्रितेषु च मल्लेषु [illegible] वासुदेवबलदेवौ च विमलवस्त्रालङ्कृतौ वादित्रघोषेण क्ष्वेलितास्फोटितरवेण च रङ्गद्वारमुपगम्य तत्र चाधोरणेनात्मनिधनाय चोदितं कुण्डलितकरं कुञ्जरवरं निरीक्ष्य निमिषमतिष्ठताम् ॥ २० ॥

हरिरथ करिणं निरीक्ष्य रोषा-
दुपरि पतन्तममुष्य दन्तकुन्तम् ।
सपदि पृथुलमुद्बबर्ह दोर्भ्यां
करिणमहन्ननुनैव साधिरोहम् ॥ २१ ॥

अथ करिणि हते निषादियुक्ते
विपुलभुजेन निजाग्रजेन शौरिः ।
मुररिपुभयदैस्स्वसिंहनादैः
समविशदाशु समाजमर्णवाभम् ॥ २२ ॥

अथ तौ रामकृष्णौ रङ्गान्तरमुपगम्य निखिलनयनभृङ्गैरास्वाद्यमानलीलासौन्दर्यमदौ महागजाविव विचेरतुः ॥ २१ ॥

ततो भोजपतिरपि भुजशिरोनिक्षिप्तगजदन्ततया खण्डेन्दुकलितगिरिशृङ्गमिव विभ्राजमानं गोवर्धनधरमवलोक्य वर्धमानमन्युस्तेन सह नियुद्धाय चाणूरमादिदेश ॥ २२ ॥

तदनु मल्लयुद्धविशारदावेतौ हृषीकेशचाणूरौ समेत्य सुरासुराणां नियुद्धसरणिमनुदर्शयन्तौ घनाविव विनदन्तौ गजाविव प्रसर्पन्तौ गण्डशैलाविव समाश्लिषन्तौ वनवराहाविव संलुठन्तौ भुजजानुशिरो मुष्टिभिः कुट्टयन्तौ कन्दुकाविव मुहुर्मुहुस्समुत्पतन्तौ महाशनिसदृशं निष्पतन्तौ महीं प्रचालयन्तौ निरीक्ष्य भयात्प्रस्विन्नमुखेन कंसेन कदननिवारणाय निवारितेऽपि वादित्रनि-

स्वने दिवि सञ्जातेन देवतूर्यरवेण द्विगुणितबलपौरुषौ प्रवर्धमानसमरौ समालोक्य लोकवर्गमाश्चर्यरूप्यनीरधौ निर्ममज्ज ॥ २३ ॥

अथ दिवि देवर्षिसङ्घैः प्रयुज्यमानाभिर्जयाशीर्भिस्संवर्धित इव आशीविषमर्दनः स्वबलं...तेमं प्रकाशयन् तमरिं भुवि पातयन् वक्षसि जानुना विष्टम्भयन् अशनिकल्पेन मुष्टिना तन्मूर्धनि नारिकेलफलप्रहारकेलीमारचयन् सपदि विहारभूमेर्घनोपहारमुपजहार ॥ २४ ॥

तदनु मुष्टिके च बलमासाद्य वज्रसदृशेन तन्मुष्टिना पिष्टातीकृते आन्ध्रतोसलकयोश्च कृष्णसङ्कर्षणाभ्यां सजम्बीरक्षेपमुत्क्षिप्य भुवि निपात्य निजचरणसङ्घर्षणेन मत्कुणदशामापादितयोः निमिषेण रङ्गमखिलमपि निर्मल्लसमाजं चानन्दाश्रुसलिलममुल्लसन्नयनमवलोक्य रोषपरवशः कंसः कृष्णरामयोः कारागारसनिगलबन्धनं वृद्धस्य वसुदेवस्य तदनर्हतीक्ष्णदण्डं दामोदरपरायणानां नन्दादिगोपानां गवादिधनापहरणं च शिक्षां व्यादिदेश ॥ २५ ॥

दण्डेषु दारुणेष्वेव मुपक्रान्तेषु तत्क्षणात् ।
देवकीगर्भविशच्छोकः कालः कंसं सदच्युतम् ॥ २३ ॥

तदनु तुङ्गासनसन्निविष्टः कंसः रङ्गान्तरादनिमिषैरप्यलक्षितेन प्लुतेन निजाग्रपतितं तमच्युतं खच्युतमशनिमिव मन्यमानः प्रसारितभुजाग्रेण तेन हरिणा केशेषु परामृष्ट एव भूताविष्ट इव तद्भयाद्विनष्टचेतनः प्रभ्रष्टमकुटमणिहारस्रगम्बरमासनादपकृष्यमाणः पश्यतामेव सकलसुरनरासुराणां पन्नग इव पन्नगारिणा रङ्गभुवि बहुशो विकृष्यमाणस्सन्नायुषोऽन्तामिव समाजसीमान्तभुवमाससाद ॥ २६ ॥

तत्सुतैस्सह तद्भ्राताऽपि बलदेवेन सुचिरं नियुद्ध्य चिरनिद्रामभ्यगच्छत् ॥ २७ ॥

ततस्तौ कृष्णबलभद्रौ निजपित्रोः देवकीवसुदेवयोः पादयुगले प्रणम्य ताभ्यामानन्दाश्रुभरितनेत्राभ्यां गाढमाश्लिष्टौ यादवानपि यथोचितं सम्मान्य तैस्सह जनकसदनमाजग्मतुः ॥ २८ ॥

अथ विदितकंसनिधनवृत्तान्तानां गृहान्ताद्बहिर्निर्गत्य तच्छवशरीरस्योपरि निपत्य, हा नाथ त्रिभुवनविख्यातविक्रम! तवास्मद्विजये विध्वंसितजरासन्धबलस्य निर्जितयक्षस्य शक्रेण सह गङ्गातटसङ्गते माय[illegible]रै निर्जरैरप्यनिर्जितस्य रत्न[illegible] [illegible]क्षोभयमुदधिं विक्षोभ्य वशीकृतवरुणस्य म[illegible] [illegible] मानुषमात्रात् कथमीदृशी दशा समापतितेति बहुशो विलप्य [illegible]रं रुदन्तीनां स्रवदश्रुस्रवन्तीनां कुररीणामिव तदन्तःपुरनारीणां परिदेवनस्वैरापूरितेषु दिगन्तरेषु, कंसजनन्यामपि हा वत्स! वृद्धामिमामपहाय क्व गतोऽसीति शोकसागरनिमग्नायां, अहामविदेवतायां च तासां दुरवस्थां [illegible]मसहमानायामिव चरमसागरनिमग्नायामुग्रसेनोऽप्युद्विग्नहृदयः [illegible] यदुसदसि वसुन्धराभारं वासुदेवे समर्प्य कंसस्य प्रेतसंस्कारमात्रम[illegible]णः, स्वगुणपरितुष्टेन तेन कृष्णेन पुनरपि सान्त्वपूर्वप्रत्यर्पितराज्यभरो निहितमकुटभरस्तदाज्ञया पौरैः पुत्रस्य प्रेत्य गतस्य पश्चिमसंस्कारं [illegible] यदुनन्दनेन सह निरन्तरनिवासभाग्योदयेन दूरादधरितस्वाराज्यं स्वराज्यं यथापुरं पर्यपालयत् ॥ २९ ॥

मथुरा मधुरेवासीद्विधुरा विभुदुर्गुणैः ।
अनन्तसुगुणैर्मुग्धा नष्टकंसोग्रसेनगा ॥ २४ ॥

इति हरिवंशचम्पौ तृतीयो विलासः

—* समाप्तः *—

# अथ चतुर्थो विलासः॥

अथ गुरुकुलवासं काङ्क्षमाणौ कदाचि-
न्मुरहरबलभद्रौ प्राप्य सान्दीपनिं तौ।
सपदि गुरुमवन्तीवासिनं साधु तस्मा-
दुर्नातिचिरमधत्तां सर्वविद्याः प्रमोदात् ॥ १ ॥

अथ कृष्णेन गुरुधनं किं ददानीत्यभ्यर्थितस्सान्दीपनिस्तत्प्रभावज्ञतया प्रभासतीर्थयात्रायां लवणोदपयसि तिमिनाऽपहृतं मृतं पुत्रमेकं पुनरानयेति तमादिदेश ॥ १ ॥

हरिरपि तथेति तां गिरमुत्तमाङ्गेन प्रगृह्य पयोनिधिं प्रविश्य प्राञ्जलिना तेन सन्दर्शितं गुरुसुतापहारिणं तिमिरूपिणं पञ्चजनाभिधेयं दैत्यं निहत्य तस्मिन्नलक्षितान्वेषिततयेव सम्प्राप्तदरो वैवस्वतं विजित्य तेन पञ्चजनविनिमयेनेव कथंचित्प्रत्यर्पितमात्मशक्त्या प्राप्तनिजप्राक्तनतनुवयोरूपवैभवं गुरुतनूभवमब्धिलब्धैरनर्घ्यरत्नैस्सह गुरवे समर्प्य सत्यप्रतिज्ञोऽभूत् ॥ २ ॥

शस्त्रास्त्रतोमरगदापरिघादियुद्धे-
ष्वत्यद्भुतावसदृशावतुलप्रकाशौ।
भूयोऽप्युपेत्य मथुरां यदुवीरमुख्यौ
तत्रोग्रसेनसविधे सुखमूषतुस्तौ ॥ २ ॥

अथ कदाचिज्जरासन्धः कंसपत्नीभ्यामस्तिप्राप्तिनाम्नीभ्या माकर्णितकंसनिधनोग्रसेनराज्यप्राप्त्युदन्तः अन्तकइव रोषाग्निना संज्वलन्निजप्रता-

पावनतैर्भूपैस्सह रथचरणसमुद्धूतरजःपटलमिषेण भीत्या विधिसदनं प्रति प्रस्थिता पृथ्वीं निवार्य प्रतिनिवर्तयतुमिवोद्धूतैर्ध्वजनिवहैः हेलितक्ष्वेलितादिरवैरपि रोदोन्तरनिरोधिन्या वरूथिन्या मधुरामुपरुरोध ॥ ३ ॥

ततस्तत्क्षणमेव रणायात्तप्रहरणैर्यादवगणैः प्रत्युद्गतेषु प्रत्यर्थिसैनिकेषु रामकृष्णावपि कालप्राप्तमतिथिमिव तं जरासन्धमनुसन्धाय विपुलमपि तद्बलं प्रविश्य भृशमयुद्ध्यताम् ॥ ४ ॥

तद्युद्धमभवद् घोरं वृष्णिमागधसेनयोः ।
चतुर्दश दश त्रीणि दिनान्यनुपमं समम् ॥ ३ ॥

तदाऽन्तरिक्षादवतेरुरुर्व्यां
दिव्यायुधानि त्रिदशार्चितानि ।
रणे हृषीकेशकरप्रदत्त-
क्षोणीशमांसेष्विव सस्पृहाणि ॥ ४ ॥

हलं संवर्तकं नाम तत्राहवकुतूहली ।
सौनन्दं नाम मुसलमपि लेभे बलो बली ॥ ५ ॥

शार्ङ्गं नाम धनुः श्रेष्ठं नाम्ना कौमोदकीं गदाम् ।
तद्द्वयं चाद्वयं भेजे नैजमेव बलानुजः ॥ ६ ॥

तदनु ताभ्यामात्तायुधाभ्यां निर्दयमर्द्यमानान् रणभुवि स्थातुमक्षमतया दिशिदिशि पलायमानान् पार्थिवपुङ्गवान्प्रतिनिवर्त्य तैस्सह जरासन्धो धाराधर इव धरेन्द्रमतुलशरधाराभिस्तार्क्ष्यध्वजरथं कृष्णमभिगम्य तद्बाणजालैस्सुभृशमभ्यर्दितोऽभूत् ॥ ५ ॥

अथ तत्सेनान्या चित्रसेनेन सह गोविन्दस्य कैशिकेन सह बल-भद्रस्य तद्वितरैर्जरासन्धयोधैस्सह वृष्णीनां च महारणे प्रवृत्ते लब्धसंज्ञो जरासन्धोऽप्यच्युताग्रजमुपेत्य निजशस्त्रास्त्रवैशारद्यमपि दर्शयन् तदस्त्रैर्निहता-श्वसूतं स्यन्दनमपहाय गदापाणिरवनाववतस्थे ॥ ६ ॥

तदनु बलदेवोऽपि प्रगृहीतगदस्तेन सह सुचिरं नियुध्य निध्यायतामेव निखिलदेवर्षिसङ्घानां सन्दर्शितनिजशौर्यचातुर्येऽपि स्वस्मिन्नपराजिते तस्मि-ञ्जातमनोगदः स्वगदां निरस्य विद्विषामायुस्समापनकुशलं मुसलमग्रहीत् ॥७॥

अथात्तमुसले बले निखिलभूभुजां शृण्वता-
मभूद्गगनवागियं घनगभीरगर्जोपमा ।
जरासुतकृते श्रमैरलमसौ न वध्यस्त्वया
यदस्य विहितोऽपरः प्रबलमृत्युरुर्वीतले ॥ ७ ॥

तदनु मागधोऽप्यासन्नमृत्युश्रवणाद्विमना भूत्वा पराजितराजन्यराज-भिस्सह स्वयमपराजित इव रणादपक्रान्तोऽभूत् ॥ ८ ॥

वृष्णिवीरास्ततो हृष्टाः देवा गगनसङ्गताः ।
स्वच्युतायुधपूगाश्च स्वं स्वं स्थानमुपागताः ॥ ८ ॥

एवं मुहुर्मुहुरात्मदुहितृयुगलवैधव्यदशासंस्मरणसञ्जातमन्युना मगधे-श्वरेण सप्तदशकृत्वः सम्प्राप्तसमरेषु वृष्णिवीरेषु पुनरप्यष्टादशसमरोद्यो-गिनं तमवगम्य मन्त्रयत्सु विकद्रुर्नाम यादवः विदितात्मनो व्यासादवगत-निजकुलसमुद्भवस्सविनयमुग्रसेनस्य शृण्वत एव गोवर्धनधरमिदमकथयत् ॥

इक्ष्वाकुसम्भवो धीमान् हर्यश्वो नाम पार्थिवः ।
भ्रात्रा निरस्तो ज्येष्ठेन त्यक्त्वाऽयोध्यां वनं ययौ ॥ ९ ॥

तं तु पुत्रा समानीतं मधुमत्या स्वयं मधुः ।
सम्मान्य तस्मै स्वं राज्यं दत्त्वाऽगात्तपसे वनम् ॥ १० ॥

हर्यश्वस्य सुतो जज्ञे यदुर्नाम महायशाः ।
राज्यं शशास धर्मेण पित्रा दत्तं स वै चिरम् ॥ ११ ॥

स एकदा सागराम्भसि वधूजनैस्सह सलिलक्रीडां वितन्वानो धूम्रवर्णनाम्ना पन्नगराजेन स्वनगरमानीय तत्र देवदानवमहर्षिपन्नगानां समुद्भवोऽस्मिन्वंशे तव भवितेत्युक्त्वा स्वस्य यौवनाश्वस्य भगिन्यामुत्पन्नाः पञ्च कन्या अपि प्रतीच्छ, यासु वरपुत्राः पञ्च प्रजायन्त इति सम्प्रार्थ्यमानः भैमकुक्कुरभोजान्धकयादवदाशार्हवृष्णिभेदेन सप्तधा ख्याता भवद्वंश्या भविष्यन्तीति वरैस्सह तत्प्रदत्तास्ताः पञ्च कन्या अपि प्राजापत्यविधिना परिगृह्य सपञ्चतारश्चन्द्र इव सागरान्निर्गत्य निजपुरमासादितवान् ॥ १० ॥

मुचुकुन्दः पद्मवर्णो माधवस्सारसस्तथा ।
हरितश्चेति पञ्चासन् तासु शूरा यदोस्सुताः ॥ १२ ॥

तत्र मुचुकुन्दो नाम राजर्षिर्नर्मदातीरे माहिष्मतीपुरीं, तत्सहैव विन्ध्यपर्वतोः पादे पुरिकां नाम पुरीं च, पद्मवर्णस्सह्यपृष्ठे वेणातीरे पद्मावतनाम्ना जनपदेन सह करवीरपुरं, सारसश्च वनवासिनाम्ना जनपदेन सह क्रौञ्चपुरं, एवं पुत्रत्रयेऽपि निजाज्ञया दक्षिणस्यां दिशि पुरचतुष्टयं निर्माय पालयति, हरितेऽपि हरिति पश्चिमायां मत्स्यमांसभोजिभिर्दाशैः परिकल्पितेन मौक्तिकप्रवालादिरत्नराशिनिवहेन दीप्यमानमभ्यन्तरद्वीपमधिवसति सति यदुरपि क्रमेण स्वराज्यं माधवे निवेश्य स्वर्गतोऽभूत् ॥ ११ ॥

माधवात्सात्वतो जज्ञे तस्माद्भीमोऽन्धकस्ततः ।
य इमां लवणघ्नेन निर्मितां बुभुजे पुरीम् ॥ १३ ॥

अन्धकाद्रैवतस्तस्माहक्षो जज्ञेऽद्रिमूर्धनि ।
रैवतश्च ततस्सोद्रिस्तदा रैवतकोऽभवत् ॥ १४ ॥

रैवतस्यात्मजो राजा विश्वगर्भो महायशाः ।
तस्य भार्यासु तिसृषु चत्वारो जज्ञिरे सुताः ॥ १५ ॥

तैरेव वसु-बभ्रु-सुषेण-समाक्षनामभिः यादववंशोऽयं प्रवर्धितः; तत्र वसुर्वसुदेवं भवत्पितरं पाण्डोर्महिषीं कुन्तीं चेदिराजस्य दमघोषस्य पत्नीं सुप्रभां च जनयामास ॥ १२ ॥

इति भुवि चिरवृद्धा यादवा माधवाद्य
प्रबलरिपुविरोधाद्राष्ट्रनाशं स्वनाशम् ।
हृदि बत कलयन्तश्चिन्तयन्त्यल्पसैन्याः
त्वमसि गतिरमीषां त्वन्मनीषाशिषां नः ॥ १६ ॥

इति विकद्रुणा गदितं स्वजनकेन वसुदेनानुमोदितं सम्मतमिदमखिलयादवानां निशम्य देशकालानुकूलमिदं राजधर्मोचितं भवद्भिर्विचिन्तितमिति प्रत्युदीर्य साग्रजो गदाग्रजः सपदि मधुरां परित्यज्य निजचरणसंचरणेन दक्षिणापथमहीं धन्यां वितन्वन् सह्यपृष्ठमुपगम्य तत्र करवीरपुरपरिसरे वेणातटवटमूले तदैवागत्योपविष्टं जटामकुटमण्डितं भार्गवमुनिं विलोक्य तद्धोमधेनुपयःपानप्रशमिताध्वश्रमः ' निशमितनिजवृत्तान्तेन तेन सह तद्दर्शितेन पथा निर्गत्य यज्ञगिरावेकां निशां नीत्वा निकषोपलभूषितां स्वट्वाङ्गनिम्नगां

तीर्त्वा तपोधनजनसन्दर्शनेन दृशौ सार्थयन् क्रौञ्चपुरवासिनं स्ववंशजं महाकपिनामानं राजानमनवेक्ष्यैव तत्र गमितैकनिशः तटवनभृङ्गीसङ्गीतसारायितविपुलनिर्झरं अजातदावसंचारं अविदितवज्रप्रहारं सुरदम्पतिविहारोचितानां निजमणिशिखराणां रश्मिभिर्दिशो दश विद्योतयन्तं वनगजगर्जितैस्संजातस्वाश्रयतरुशाखाप्रक्षोभमुत्पततां पतत्रिणां कलकलैस्स्वागमनमभिनन्द्य साभिनयमात्मानमाह्वयन्तमिव स्थितमुच्छ्रायेण मन्दरगिरिश्रियमुद्वहन्तं गोमन्तं नाम सानुमन्तमासाद्य तच्छिखरवरं खगैरपि दुरारोहमारुरोह ॥ १३ ॥

भविष्यति निजायुधध्वजसमागमोऽत्र द्रुतं
जयिष्यसि रिपून् रणे सबल एव तं त्वामियम् ।
प्रतीक्षत इहाऽऽश्रुतं प्रति धरैकवेणीधरा
स्मरेति हरिमीरयन् झडिति जामदग्न्यो ययौ ॥ १७ ॥

अथ तौ चेरतुस्तत्र शिखरे मधुरश्रियौ ।
बलकृष्णेन्दुजीमूतौ जगदानन्दवर्धनौ ॥ १८ ॥

तत्र बलभद्रस्त्वेकदा गदाग्रजमपहाय स्वयमेकाकी संचरन् कमपि कदम्बतरुमासाद्य तृष्णया तत्कोटरसम्भवां कादम्बरीं नाम मदिरामासेव्य तन्मदारुणितलोचनः तत्समयसमुपस्थिताभिः वारुणी-श्री-कान्तिसं[illegible]भिस्तिसृभिस्समर्पितनिजस्रगम्बराभरणः पूर्णेन्दुरिव विरराज ॥ १४ ॥

कृष्णोऽपि क्षीरसागरद्वीपवासिना स्वेनैव पुरा सन्धारितं सुप्त इव स्थिते स्वस्मिन् शक्ररूपेण बलिनाऽपहृतं तद्विज्ञाय युधि बलिं निर्जित्य गरुत्मताऽऽनीय स्वशिरसि विमुक्तं निजमकुटमासाद्य मेरुशृङ्गोपचितमहेन्द्रनीलशैलश्रियमाबभार ॥ १५ ॥

अथ जरासन्धोऽपि निजयशःपराजितराजहंसमण्डलीभिरिव राजमण्डलीसमुद्धूतसितातपत्रश्रेणीभिरुपशोभमानः बलकृष्णजिघांसया मधुरामुपेत्य तौ तामपहाय गोमन्तशिखरमाश्रिताविति देवर्षिगिरा निश्चित्य ततः प्रतिनिवर्तमानः संवर्तसमयसमुज्जृम्भमाणमहार्णवमनुकुर्वता बलेन तं गोमन्तगिरिं परिवार्य गोसमं कर्तुकामः चेदीशवचसा शुष्कतृणकाष्ठसंवेष्टितमसुं धाराधरमिव रविस्स्वतेजसा जातवेदसा प्रदग्धुमारभत ॥ १६ ॥

दह्यमानेऽपि शैलेन्द्रे नीरुजावेव चेरतुः ।
दंसितावग्निदत्ताभ्यां कवचाभ्यां यदूद्वहौ ॥ १७ ॥

अथ तौ चटचटपटपटध्वानभिद्यमानधातुनिवहस्यन्दमानमणिनिकरस्य दीप्यमानतरुलतागुल्मश्रेणीसमुल्लसज्ज्वालावलीसमुन्मिषदङ्गारकणखद्योतगणविद्योतमानधूमान्धकारकबलिताम्बरस्य ज्वालान्तरनिरुद्धसिंहशार्दूलादिविविधमृगनिकरदीनाक्रन्दरवमुखरगुहान्तरस्य तटवननिजनीडद्रुमसम्प्लवशोकातिरेकविस्वरविद्रवत्खगनिकरनिरन्तरदिगन्तरस्य दह्यमानस्य स्वाश्रयगिरेः दुरवस्थामुद्वीक्ष्य तस्य दयमानमानसौ निजचरणतलनिष्पीडनेन शिखरनिस्सृतैर्निर्झरौघैस्संशान्तानलं तमचलमातन्वानौ यन्त्रोन्मुक्तमहोपलाविव तद्गिरिशिखरात्प्रतपत्तद्गिरिमूलसम्भूतसन्तापासहिष्णुतया सुदूरमपसारिते तस्मिन् रिपुसैन्यसागरे तदन्तरचरच्चतुरङ्गयादोङ्गनिष्पेषणाय निष्पेततुः ॥ १७ ॥

ततस्ताभ्यां स्मरणमात्रसमुपनतहलमुसलसुदर्शनगदाद्यायुधसमुल्लसद्भुजयुगलाभ्यामनिलानलाभ्यामिव हलचक्रतेजसा दह्यमाने चतुरङ्गसैन्येऽसृङ्नदीतटघटितगजतुरङ्गनरमांसैः कङ्कगृध्रादीनां महोत्सवे प्रवृत्ते प्रध्वस्तबलप्रहरणाश्वसूतस्यन्दनतया रणमुत्सृज्य मरणभयात्पलायनोन्मुखान् पार्थिवप्रमुखान् प्रशंसावचनैः कथमपि प्रतिनिवर्त्य तैस्सह समरतलमलङ्कुर्वाणो मगधेश्वरः

सुत्राम्णा वृत्रइव मुसलेन युधि दरदं निहत्य गर्जता बलेन सह गदासमरसंप्रवृत्तः स्वसमरवैचित्र्येण चित्रीकृताम्बरचरसिद्धचारणगन्धर्वविद्याधरादिविबुधनिकरस्तस्मिन् बले गदां निरस्य गृहीतमुसले तव न वध्योऽयमचिरेणापरेण मृत्युमधिगच्छतीति दिवि प्रवृत्तामशरीरवाणीं पुनरपि निशम्य शङ्कितहृदयतया गदयैव हलिना पराजितः समराङ्गणादपक्रान्तोऽभूत् ॥ १८ ॥

अन्येऽपि नृपतयः शङ्खचक्रगदाधारिणा हरिणा नियुध्य विद्राविताः व्याघ्राघ्राता मृगव्राता इव भीता एव दुद्रुवुः ॥ १९ ॥

अथ युधि विजितारेर्वीक्ष्य शौर्यं मुरारेः
द्रुतममुमुपयातश्चेदिराजोऽतिधीमान् ।
मगधपतिमपास्य प्रातरप्यन्धकूपं
त्यजति न किमनन्धः सेवते किं न भानुम् ॥ २० ॥

अथ हरिरपि तेन पितृष्वसुर्भर्त्रा सन्नह्य समुपनीतं रथयुगलमास्थाय सबलस्सबलेन तेन सह सृगालवासुदेवं द्रष्टुकामः पथि नीतनिशात्रयः करवीरपुरमुपससार ॥ २० ॥

अथ करवीरेश्वरोऽपि यदुवीरमवज्ञाय स्वसेनया निरुध्य स्वबलमुच्चैः प्रशंसमानो वासुदेवद्वयमसहमानः तेन सह द्वन्द्वयुद्धमुपगम्य स्वहृदयप्रविष्टतच्चक्रधारासमर्पितासुः भूम्यां पपात ॥ २१ ॥

हते तस्मिन् रुदन्तीनां कुररीणा मिव स्वनैः ।
तदन्तःपुरनारीणां रोदोन्तरमरुध्यत ॥ २१ ॥

तदनु केशवोऽपि तदग्रमहिष्या विदुष्या सुशीलवत्या पद्मावत्या सपदि निजपादमूलसमर्पितं बालं शक्रदेवनामानं तत्पुत्रमेव तद्राज्येऽभिषिच्य तदहरेव निर्गतः पथि पञ्चरात्रोषितः प्रोषितस्वागमनतोषितेन उग्रसेनेन प्रेषितैः

यादवगणैरभ्युद्गतः स्वविजयोत्सवमधुरां मधुरां प्रविश्य तत्पुरपुरन्ध्रीकटाक्षसंसर्गद्विगुणितदेहरुचिः निजभवनमभजत ॥ २२ ॥

शक्रदेवः स्वपितुः प्रेत्य गतस्य पश्चिमसंस्कारं निर्वर्त्य स्वराज्यमनुबभूव ॥

चेदिपतिर्दमघोषोऽपि दामोदरेण सहाध्वन्येकरात्रोषित एव प्रतिनिवृत्तोऽभूत् ॥ २४ ॥

रामाच्युतौ तु मधुरामुपगम्य रम्यां
राज्ञा विरेजतुरलं जगतस्सुखाय ।
कीटोद्भवस्य गुरुणा किरणाभिपूर्णौ
खे रेवतीमुपगताविव चन्द्रसूर्यौ ॥ २१ ॥

अथैकदा बलभद्रः पुरान्निर्गत्य वन्यवेषेण व्रजमुपगतस्स्वागमनसमेधितानन्दैः गोपवृन्दैः सादरमभ्यर्चितस्तैस्सह बृन्दावनभुवि पानवशतया वशाबल्लभइव संचरन्नदूरवर्तिनीं यमुनां मदारुणितचक्षुषोद्वीक्ष्य तत्सलिलावगाहनकुतूहलेनाह्वयन्ननागतां तामतिरुषा बलेन सम्प्रकर्षन् स्वसविधमागतां वेपथुमतीं रुदन्तीं सतीरूपमुपगृह्य शरणमुपगतवतीं तां विसृज्य तस्या वेणीमिव स्वनामाङ्कितां वेणीमेकां तत्र निर्माय निखिलभूतैरप्यभिष्टुतबलस्ततः पुनरपि पुरीमाजगाम ॥ २९ ॥

सदनमुपगतोऽसौ स्वानुजेनैव दृष्टः
सपदि तदुपनीते स्वासने संनिविष्टः ।
तदनु कुशलमस्मै सर्वमाख्याय तुष्टः
तृणजलवनगोषु स्वेषु गोपेषु पृष्टः ॥ २२ ॥

## इति हरिवंशचम्पौ चतुर्थो विलासः

—※ समाप्तः ※—

## अथ पंचमो विलासः ॥

——:0:——

ततो हरिर्भीष्मकराजपुत्री-

स्वयंवरे श्रोत्रमुपागते द्राक् ।

उपागतः कुण्डिनपत्तनं स

रथेन युक्तो यदुभिस्समस्तैः ॥ १ ॥

स्मृतोपयातेन गरुत्मता युतः

स कैशिकेनादरपूर्वमर्चितः ।

पुरीं प्रविश्याद्भुतमन्दिरं विशन्

उवास तत्र स्वगिरौ यथेश्वरः ॥ २ ॥

हरिं समीक्ष्यागतमद्भुताकृतिं

सवैनतेयं निजयादवैर्युतम् ।

जरासुतादिक्षितिपालमण्डली

व्यचिन्तयत्तत्र समागता परम् ॥ ३ ॥

अयं तु साक्षाद्धरिरेव नापरः

पुरा सुरारीनिह चावधीद्बली ।

कथं खगेशोऽन्यवशः स्वयंवरः

कथं भवेद्वेति जरासुतोऽवदत् ॥ ४ ॥

विचार्य गोमन्तगिरौ गरुत्मता

विनाऽपि युद्धं नृहरेस्तदद्भुतम् ।

सुनीथ आह स्मृतताक्ष्यविक्रमो
जरासुतोक्तं न मृषेति बुद्धिमान् ॥ ५ ॥

जनार्दने दोपलवं न लक्षये
विनाऽस्मदाह्वानमसौ न युध्यति ।
कलिस्ततो यत्र वयं समानितः
प्रसीदतीत्याह च दन्तवक्रकः ॥ ६ ॥

अयं च विष्णुर्दितिजा वयं च नो
भयं च तस्मादिति सिद्धयेव हि ।
वृतस्य कन्याऽत्र तु युद्धचिन्तना
वृथेति साल्वोऽवदद्दाहवोद्धतः ॥ ७ ॥

इति ब्रुवाणेषु नृपेषु भीष्मको
निरुत्तरोऽन्तर्मनसो व्यचिन्तयत् ।
सुतस्य दौरात्म्यमतीव रुक्मिणो
हरेश्च सामर्थ्यमपि स्मरन् परम् ॥ ८ ॥

ततो विनिश्चित्य हरेः प्रसादनं
स रुक्मिरक्षाविषये सुसाधनम् ।
समेत्य तं वाचमिमामदीनव-
त्क्रथेन साकं निशि कैशिकोब्रवीत् ॥ ९ ॥

धन्यौ स्म देव भवता गृहमागतेन
पूज्योऽसि पात्रमसि राज्यमिदं भज त्वाम् ।

आवामुपेन्द्र इति शङ्कराभिषिक्तौ
राजेन्द्र इत्यपि सदस्यभिषेक्तुकामौ ॥ १० ॥

अस्मत्प्रदत्तां भज राज्यलक्ष्मीं
श्वो मागधाक्षेपपवित्रमेतत् ।
एवं न चेदासनसङ्कटं ते
सर्वज्ञ राज्ञां हि भवेत् समाजे ॥ ११ ॥

इति विज्ञाप्य तं कृष्णं प्रहृष्टेनान्तरात्मना ।
निशां नीत्वाऽगमत्प्रातः पूर्णं नृपसभं नृपः ॥ १२ ॥

तत्र सिंहासनारूढान् नृपान् वीक्ष्य स भीष्मकः ।
स्वासनं दातुकामोऽस्मि कृष्णायेत्यब्रवीद्वचः ॥ १३ ॥

ततस्तत्क्षणमेव क्षणप्रभाभासुरविचित्रतररत्नखचितकनकमयनूत्नसिंहासनमेकं सलेखं कैशिकस्य पुरतो निधाय चित्राङ्गदो नाम पुरुहूतदूतः स्वयमदृश्य एव पुनःपुनः पाकशासनशासनमिदमुच्चैर्व्याजहार ॥ १ ॥

देव विदर्भाधिपते! कृतमनुजावतारस्य हरेरस्मत्पतेरासनमन्यासितं दातुमनुचितमिति विश्वकर्मनिर्मितमिदमासनं वासवेन सम्प्रेषितमस्मिन् सन्निविष्टं विष्टरश्रवसं वैश्रवणसम्प्रेषितैः निध्यंशसम्भवैः काञ्चनरत्नपूर्णैरष्टभिरष्टभिः कलशैरपि राजेन्द्रपदेऽखिलराजमण्डलीपरिवृतः कुलेन शीघ्रमभिषिञ्चाव समागतेषु यः कोपि न कुरुतेऽस्य शासनं स तस्य वध्य एव भविष्यति । भोभो भूपतयः! त्रिभुवनपतेरिन्द्रस्य शासनमिदं राजेन्द्राभिषेचनाधिकारवर्तिभिर्भवद्भिरवश्यानुष्ठेयमिह रङ्गे तु जरासन्धसुनीथरुक्मिसाल्वाश्चत्वारः शून्यहेतोस्तिष्ठन्तु तदितरे सर्व एव क्रथकैशिकाभ्यां सह सभां गत्वा यथोक्तमच्युतमभिषिञ्चतेति ॥ २ ॥

श्रुत्वाऽभ्रजनितां वाचं घनगर्जोपमामिमाम् ।
विमनस्कैर्वितेजस्कैर्दिनदीपायितं नृपैः ॥ १४ ॥

तस्मिन् दूते गते भूपाः भीष्मकेनैव सान्त्विताः ।
मागधेनाप्यनुज्ञाता रङ्गादुत्तस्थुरञ्जसा ॥ १५ ॥

अथ सर्वेऽपि नृपतयः शक्रशापभयात्सबला एव निर्गत्य क्रथकैशिकौ पुरोधाय पुरं प्रविष्टाः तत्र समुच्छ्रितपताकाध्वजमालिनीं दिव्यस्रग्दामशालिनीं विचित्रतरविमानयानावलीपरिवृतां सिद्धचारणगन्धर्वविद्याधरमहर्षिगणसंसेविता मप्सरोगणनर्तनानुकूलविविधतुरवरवादित्रघोषा मच्युतसेवासमेधितामितनयनसम्प्रेक्षणीयतेजोविशेषां स्थानहेतोर्भुवमुपगतां नरदेवभवनपुरतः स्थितां शुभां देवसभां प्रविश्य विस्मयाविष्टहृदया बभूवुः ॥ ३ ॥

तदनु विमानवरमारुह्य दिक्पालैस्सह वियत्तलमलङ्कुर्वाणे गीर्वाणपरिवृढे सभातलमुपाश्रितं सर्वमङ्गलापूजितं परममङ्गलविग्रहं यदूद्वहं नवरत्नखचितदिव्यसिंहासनारूढं महेन्द्रोपलमिव मेरुशृङ्गाग्रसंरूढमम्बुदगणैस्सलिलैरिवाम्बरचरैस्सहकारदलसहकारिभिः कलशैः काञ्चनमणिकुसुमगन्धचूर्णादिभिः सतूर्यस्तवरवमभिषिच्यमानमासेव्य तद्वितीर्णवस्त्राभरणसमलङ्कृतविग्रहाः तत्कृतविग्रहस्मरणशङ्कितमतयो नृपतयस्ते पत्युर्दिवस्पतेरपि हरेः पुरतो स्वैरविग्रहाः सङ्कुचितविग्रहा एव तदृगन्तपरिदर्शितेषु स्वोचितासनेषु यथानियोगं सन्निविष्टा बभूवुः ॥ ४ ॥

अथ हरिमिदमूचे भीष्मको भीतभीतः
प्रणतशरणद त्वां प्रार्थयेऽहं प्रसीद ।
त्वयि कलुषमनन्ते मर्त्यभावेन पूर्वं
नरपतिभिरमीभिर्यत्कृतं तत्क्षमस्व ॥ १६ ॥

एतदाकर्ण्य प्रहसितवदनः पुण्डरीकनयनः क्षत्रधर्मोचितमेव भवद्भिः कृतं तन्न कलुषमिति स्वहृदयनैर्मल्यमावेदयन्निखिलमपि नृपमण्डलं समाश्वास्य कैशिकमुखमालोकयामास ॥ ९ ॥

सोऽपि स्वतनयदुर्नयेन सुतास्वयंवरारम्भ इति स्वदोषमपि निरूप्य क्षमानिधिं तमजं क्षमापयामास ॥ ६ ॥

अथ हरिरपि शृण्वतामेव सकलभूभृतां विदर्भाधिपतिमिदमवादीत् ॥

स्वयमतिमृदुगात्री सैव दुग्धाब्धिपुत्री
द्रुहिणवचनकर्त्री तेऽद्य पुत्री बभूव ।
न हि नृपतिवरैषा मानुषी सत्यमेनां
भुवि वरमनुरूपं प्रेक्ष्य तस्मै प्रयच्छ ॥ १७ ॥

नृपवर दश पूर्वा राज्यदानेन मह्यं
तव दिवमुपयाताः सांप्रतं ह्युत्तराश्च ।
दश दिशि दिशि कीर्तिं प्राप्य यास्यन्ति सर्वे
चिरमिह कृतराज्यः प्राप्स्यसे त्वं च धन्यः ॥ १८ ॥

इह वस पुरमेतत्पालयन् भूपते त्वं
ह्यहमपि मधुरां तां यादवैर्यामि वस्तुम् ।
तव सततममीषु प्रेमपात्रेषु पूर्णा
पितुरिव निजपुत्रेष्वच्युता प्रीतिरस्तु ॥ १९ ॥

इत्युक्त्वा नृहरिर्नैजं विश्वरूपं च दर्शयन् ।
तेन सम्पूजितो भक्त्या तार्क्ष्येण सहितो ययौ ॥ २० ॥

अथ कृष्णसम्मानिता अपि नृपाः सुदूरं तमगमनुव्रज्य प्रतिनिवृत्ताः पुनरपि रङ्गं प्रविश्य कैशिकेनानुज्ञाताः विज्ञातकार्यास्तन्नगराद्यथायथं निर्ययुः ॥ ८ ॥

तत्र जरासन्धादयः केचन कैशिकस्यान्तरमभिप्रायमवगन्तुकामास्सन्निविष्टास्तेन भीष्मकेण निजतनयदुर्नयेनैवं प्रवृत्तमिति बहुशः क्षमापिता बभूवुः॥

तदा सौभपतिस्साल्वोऽपि शौरिशौर्यमवार्यं संस्मृत्य सुतचेष्टानुशोचिनं विदर्भाधिपतिमिदमवादीत् ॥ १० ॥

राजन्नलं खेदेन; रुग्मिणोऽस्य भुजवीर्यं निखिलैः केशवान्यैरनिवार्यम्; असौ भार्गवास्त्रतेजसा दुर्जयोऽपि सकलशास्त्रवित्तया वासुदेवं विबुधपतिं विदित्वैव तं न योधयति ॥ ११ ॥

तथाऽपि—

अस्ति प्रतपसो गार्ग्याद्द्रोण्यां रुद्रप्रसादजः ।
स कालयवनो नाम कृष्णजेताऽपि मृत्वि ॥ २१ ॥

स खलु माथुराणामवध्यस्सद्योऽस्माभिर्दूतमुखेन सम्प्रेरितो यदि मधुरामुपैतितरा मधुसूदनं विजेष्यतीति ॥ १२ ॥

एतदाकर्ण्य मगधेश्वरस्स्वशौर्यग्लानिशङ्कया सङ्कुचितमना अपि मुनीश्वप्रभृतिभिस्सम्बोधितस्सौभपतिमेव कालयवनप्रेरणतया सम्प्रेषयन्निजनगरमाससाद ॥ १३ ॥

शान्ते स्वयंवरे रुग्मी चिन्तामाप सकैशिकः ।
कान्तो मे कृष्ण इत्येव मुदमेवाप रुक्मिणी ॥ २२ ॥

ततस्सौभपतिरपि तदैवान्तरिक्षपथेन यवनपुरीमुपेत्य कालयवनेन बहुशस्सम्भानितस्सकलनृपमण्डलीपरिवृतस्य मागधस्य गिरमसहायशूरयोर्बलकृष्णयोर्हलमुसलगदाचक्रतेजसा दुर्विषहं दोर्वीर्यं च निवेद्य विग्रहेण तन्निग्रहशक्तिर्भवतो भवज्जनककतपःपरितोषितभवप्रदत्तमाधुरावध्यत्ववरादस्तीत्यपि प्रस्तुवन् तस्मिन् तथैवेति मागधगिरं शिरसा प्रगृह्य महता सैन्येन मधुरां प्रति प्रस्थिते तास्स्वपुरमाजगाम ॥ १४ ॥

अथ वैनतेयोऽपि विदर्भनगराद्भोजपतिपुरं व्रजतो हरेरनुज्ञामध्वन्येव सम्प्राप्य पश्चिमाम्बुधितटगतरैवतकाद्रिमुपगम्य राजेन्द्रनिवासयोग्यराजधानीनिर्माणोचितभुवोऽन्वेषणाय निर्गतोऽभूत् ॥ १५ ॥

ततो हरिरपि स्वस्य राजेन्द्रपदाभिषेकं निशाम्य निस्तुलानन्दजलधिमग्नेनोग्रसेनेन महावैभवेनाभ्युद्गतः सुरनगरीमिव सुधर्मोपेतां सुकविगिरमिव नानालङ्कारमधुरां मधुरां प्रविश्य सुरनरवरैः स्तूयमानगुणवैभवस्सुमेरुशिखरमिव समुन्नतं नरदेवभवनमिव समलङ्कृतं वसुदेवभवनमभजत ॥ १६ ॥

तत्र पित्रोः पदद्वन्द्वे नत्वाऽऽनन्दाश्रुसेचितः ।
रौहिणेयसहितः सुखेन न्यवसद्धरिः ॥ २३ ॥

अथ सुपर्णस्समागत्य रहसि वासुदेवमेवं व्यजिज्ञपत् ॥ १७ ॥

कुशस्थली नाम शुभस्थली ते
निवासहेतोरपराब्ध्यनूपे ।
अदूरसंस्थाद्भुतरैवताद्रिः
लब्धा निवासोऽत्र हरे प्रशस्तः ॥ २४ ॥

एवमाख्याय गतवति गरुडे गरुडध्वजेऽपि तन्निवासाय निजाग्रजेन विचिन्तयति विदितवृत्तान्तेन भोजपतिना यादवैश्च तदनुगमनमेव निश्चितमभूत् ॥ १८ ॥

एतस्मिन्नेव काले तु जरासन्धः स्वसेनया ।
मधुरां रोद्धुमारेभे यवनोऽपि समाययौ ॥ २५ ॥

हरिस्त्वदूतं विससर्ज तस्मै
कालाहिपूर्णं कलशं प्रदाय ।
पिपीलिकापूर्णममुं विधाय
सम्प्रेषयामास पुनश्च सोऽस्मै ॥ २६ ॥

ततो हरिरपि नारदमुखाद्विदिततद्वरस्तं कालयवनमजय्यं विज्ञाय तत्क्षणमेव सर्वयादवैस्सह मधुरामपहाय ससैन्य एव निर्गतः पश्चिमोदधेरनूपदेशे स्वेच्छयैव विनिर्मितां द्वारवतीं नाम पुरीमाससाद ॥ १९ ॥

तत्र रैवतकशैलसमीपे
सागरोदरसमीरसनाथे ।
स्थानमापुरकुतोभयमेते
यादवा भुवि यथा दिवि देवाः ॥ २७ ॥

अथ मधुसूदनः पुनरपि मधुरामासाद्य तत इतस्सञ्चरन् कालयवनदृक्पथमागतः प्रभीत इव पुरान्निर्गत्य पलायमानो जिघृक्षुणा तेन सुदूरमनुगम्यमानो योगवशात्तत्करमनुपमत एव कामपि गिरिगुहामाविवेश ॥ २० ॥

यत्र देवासुरे युद्धे कृतकर्मा महाबलः ।
मुचुकुन्दो वरादैन्द्रादशेत चिरनिद्रितः ॥ २८ ॥

स्वोत्तरीयेण तं सम्यगाच्छाद्य भगवान् हरिः ।
शिरोदेशे विलिल्येऽस्य तद्गुहायां गुहाशयः ॥ २९ ॥

तदनु यवनेश्वरोऽपि तां गुहामनुविशन् मान्धातृतनयं तं मुचुकुन्दं मुकुन्दबुद्ध्या स्वाङ्घ्रितलेन सङ्घट्टयन् प्रबुद्धस्य तस्य नयनसमुल्लसद्रोषशोचिष्केशरोचिषा शलभ इव निर्दग्धस्सहसा भस्मसादभूत् ॥ २१ ॥

तदनु मुचुकुन्दोऽपि कथितनिजवंशेन वासुदेवेन विहितसल्लापो विदितयुगद्वयातिक्रमकलिसंक्रमस्तेन सह गुहां विसृज्य बहिर्निर्गतस्स्वराष्ट्रमन्यवशं निशम्य निशाम्य च निखिलां महीं ह्रस्वमनुजैस्संसेवितां तत्र वीतस्पृहः तमजमामन्त्र्य प्रालेयगिरिमुपेत्य तपसि स्थितस्ततश्चिरेण दिवमास्थितोऽभूत् ॥

अथ मधुसूदनः पुनर्मधुरामुपेत्य तां यवनवाहिनीं मृतनाथां सर्वां स्वर्वाहिनीं भगीरथ इव संगृह्य द्वारकामाससाद ॥ २३ ॥

ततस्स्मृतिमात्रसन्निहितेन विश्वकर्मणा सागरोदरदेशे निजभवननिवेशेन विस्तारितां निजयोगेन शङ्खनाम्ना निधीन्द्रेण प्रतिसदनं प्रवर्षितमहाधनां मारुतेन च सपदि समानीतसुधर्माख्यसुरसभामपहसितामरावतीं तां द्वारावतीं यादवैस्सह समलङ्कुर्वाणेन हरिणा यथा मधुरायामुग्रसेनादिका एव नृपादिपदेषु निवेशिता बभूवुः ॥ २४ ॥

अथानुजानुमत्यैव रेवतस्यात्मजां बलः ।
उपयेमे विधानेन रेवतीं गुणपार्वतीम् ॥ ३० ॥

ततः पुनरपि जरासन्धप्रभृतिषु नृपतिषु रुक्मिणीस्वयंवरार्थं विदर्भनगरमागतेषु निजसुतां तां चेदिनृपालबालस्य शिशुपालस्य दातुकामे च भी-

ण्मके हरिस्स्वयमपि स्वपितृष्वसुः प्रियार्थमिव बलेन सह सयादवबलस्तन्नगरमासाद्य बहिर्निविष्टो निजजनककारि तसकलकौतुकमङ्गलामादृतसर्वमङ्गलां शिबिकामारुह्य निस्तुलवैभवेन पुराद्बहिरागत्य शचीमभ्यर्च्य तद्गृहाद्बहिर्निर्गतामनल्पाभरणमणिप्रभाधिक्कृतमार्ताण्डमण्डलप्रभां वैतानशिखिशिखासप्रभां, स्वलावण्यसरिद्वरवेणीमिव सन्धारिताभरणश्रेणीं वेणीं स्वर्णाम्बररुचिरश्रोणिदेशे निजकरेण सन्दधानां रुचिरतरस्रग्विणीं रुक्मिणीं तां विग्रहवतीं निजविजयलक्ष्मीमिव समुद्वीक्ष्य विजिताक्ष इव तत्साविधमुपागतस्तया च मूर्तस्वार्चितशक्रसतीप्रसाद इव समुद्वीक्ष्यमाणस्सकलजनसमक्षं हाहेति प्रेङ्खद्भेत्रनेत्राणामेव तद्रक्षकाणां घन इव तडिल्लतां मृदुतनुलतां तां परिगृह्य श्यामलनिजभुजलतान्दोलिकया धारयन् तस्या मनोरथमिव स्वरथमपि सम्पूरयन् सपक्षशिखिनिवहमाह्लादयन् विपक्षवनरुहप्रहर्षमुन्मूलयन् स्वाग्रजे बलदेवे च स्वानुजे गदे च तदितरेषु वृष्ण्यन्धककवीरेषु च निहितसमितिभरस्स्वपुरीमाजगाम ॥

ततोऽद्भुततरो रणो विविधशस्त्रवर्षी महा-
नभूद्धलजरासुतप्रमुखयोर्नृपानीकयोः ।
सतूर्यरवमुद्रजस्तिमिरमम्बरे यादवैः
जितं जितमिति क्षणाद्विविपदां वचोऽप्युत्थितम् ॥ ३१ ॥

रुग्मी च रोषपरवशस्तदा भीष्मकस्य पुरतः प्रतिज्ञामिमामकरोत् ॥

अहत्वा युधि गोविन्दमनानीय च रुक्मिणीम् ।
कुण्डिनं न प्रवेक्ष्यामि सत्यमेतद्ब्रवीमि ते ॥ ३२ ॥

इति विरचिताशक्यप्रतिज्ञो वाग्मी रुग्मी सपदि निजवरूथिनीमादाय रथेन निर्गतस्तादितरैर्भीष्मकसुतैः क्रथकैशिकमुख्यैरप्यनुगतस्सुदूरमुपगम्य

रेवान्तिके रोहिणीरमणमिव रुक्मिणीहरणमासाद्य स्वयमेकाकी तेन सह द्वैरथयुद्धं प्रवर्तयन् तच्छरशकलिताश्व-सूत-ध्वजायुधतया जडीकृते स्वस्मिन्, घनसमूहेष्विव समापतत्सु ससैन्यस्वानुयायिव्यूहेष्वपि तदाशुगपरम्परया तूलायमानेषु, पुनरपि निजशस्त्रास्त्रनैपुण्यं सन्दर्शयन् तदीयशरनिकृत्तशरासनस्वस्यन्दनात्तत्स्यन्दनोपरि सचर्मासिरवप्लुतोऽन्तरा तन्नाराचनिवहसमर्पितहेतिचेतनः तद्रथचरणं शरणमुपगत इव भूमौ निपतन्निजभगिनीप्रार्थनयैव तेनावियोजितप्राणः प्रयाते तस्मिन् कथमपि लब्धसंज्ञो हीनप्रतिज्ञतया कुण्डिननगरविमशन् विदर्भेषु भोजकटमित्यन्यत्पुरं निवेश्य तत्रस्थ एव दक्षिणामाशामन्वशात् ॥ २७ ॥

अथ बलदेवेन सह वृष्णिवीरेष्वपि जरासन्धं निर्जित्य द्वारकामुपगतेषु,

तत्रासीत्सुमुहूर्त एव सुमहान्नित्याविमुक्तात्मनोः
ब्रह्माद्यैरमरैर्महर्षिनिकरैस्सेव्यो विवाहोत्सवः ।
सौन्दर्यामृतसेवने पथि मिथः संसक्तनेत्रान्तयोः
भैष्मी-केशवयोर्द्विषां च सुहृदां खेदाय मोदाय च ॥ २३ ॥

रेमे तयाऽऽत्मरमणोऽपि सुतान् दशैकां
लेभे सुतामपि गृही स हरिर्महिष्याम् ।
कृत्वैवमेव महिषीरपि सप्त चान्या
बह्वीर्वशी भवमहाम्बुनिधौ विजह्रे ॥ ३४ ॥

**इति श्री हरिवंशचम्पौ पञ्चमो विलासः**

**—* समाप्तः *—**

# अथ षष्ठो विलासः ॥

-:o:-

तदा सत्राजिदादित्यमुपास्य तपसोज्ज्वलं ।
मणिं श्यमन्तकं नाम लेभे रविमिवापरम् ॥ १ ॥

अथ सदसि तमन्ववेक्ष्य जात-
स्पृह इव स बभूव पूर्णकामः ।
नृहरिरमुमदान्नृपो न तस्मै
परमिह निदधे च निजेऽनुजे प्रसेने ॥ २ ॥

अथ कदाचित्सोऽयं प्रसेनस्समणिर्विजने वने मृगयां वितन्वन् केनचित्पञ्चास्येन पञ्चतामनायि ॥ १ ॥

अथ सत्राजिता निजानुजवधः शमन्तकमणिहेतोः शौरिणा कृत इति समुत्पादितं मिथ्यापवादं परिजिहीर्षुः परमपुरुषोऽयं कतिपययादवैस्सह निजपुरान्निर्गत्य क्वचन कान्तारभुवि सिंहनिहतं प्रसेनं तददूरत एव ऋक्षनिषूदितं सिंहं च निरीक्ष्य तदृक्षपदपदव्या व्रजन्नेव तदर्भकमुपलालयन्त्याः धात्र्याः कथागमकमावेदिकया गीतिकया निश्चितां तद्गुहां स्वयमेकल एव प्रविशन् ददर्शाग्रतो बन्दीकृतान्धकारनिकरुम्बमिव तनूरुहवृन्दमुद्वहन्तं भानुमन्तमिव स्वतेजसा ज्वलन्तं जाम्बवन्तम् ॥ २ ॥

युध्वा तेन हरिश्चिरं स्थिरतरं शौर्यं तदीयं विदन्
स्वीयं चास्य निदर्शयन्नसदृशं वीर्यं निजां स्मारयन् ।
रामाख्यां च तनूमजय्यमथ चात्मानं परं वेदयन्
भक्त्या तेन समर्पिते मणिसुते सङ्गृह्य गेहं ययौ ॥ ३ ॥

ततः प्रागेव तमजं गुहाया बहिर्बहूनि दिनानि प्रतीक्ष्य निराशतया पुरीं निवृत्य पुरमुपागतान् यादवानवलोक्य शोकसमाकुलस्य स्वकुलस्य पूर्णे-न्दुमिव स्वपौत्रेण [illegible] कुक्षिमनन्तयानन्दजलधिमुद्वेलयन्तं सपदि मणिमुपाहृत्य तं [illegible] भगवन्तमवलोक्य लज्जया मकुन्दन् सत्राजिदात्मापराधं शमापयन्निजदुहितरं मणिना सह तस्मै प्रदाय निश्चिन्तमना बभूव ॥ ३ ॥

हरिरपि तं मणिं प्रत्यर्प्य सत्राजिते तत्सुतां सत्यभामामेव समग्रहीत् ॥

तत[illegible] निश्चितां सत्यामच्युतायादादिति रुषा शतधन्वा नाम यादवस्सत्राजितं निहत्य मणिमक्रूरे निवेशितवान् ॥ ५ ॥

अथ सत्यामुखेन विदिततद्वधे भगवति निजभयाद्धावमानं शतधन्वा-नं स्वाग्रजेन सह सुदूरं विद्राव्य ततस्स्वयमेकाकितयैव तं निहत्य तस्मिन्मणि-मनवेक्ष्य नास्तीति वदति सति, स तस्मिन्विशङ्कितो बलभद्रो निजमनुजं पुरं चापहाय हायनानि कतिचन मैथिलेनाभ्यर्चितो मिथिलायामेव सुखमवात्सीत् ॥

ततो मणिभयादक्रूरोऽपि पुरादपक्रान्तः पुनरपि विषयविपत्त्यवग्रहनि-ग्रहाय कुकुरान्वयैरानीतस्सुनीतिमत्या मत्याऽऽत्मनः कन्यां स्वसारं च वासु-देवाय समर्प्य शान्तचित्तोऽभूत् ॥ ७ ॥

अथ योगेन नृहरिः मणिमक्रूरगं विदन् ।
आनाय्यानुनयेनैव पुनस्तस्मै समार्पयत् ॥ ४ ॥

तदनु तन्मणिप्रकाशेनेव शमितमनस्तमोमले बले यथापुरं स्वपुरमु-पेयुषि, ॥ ४ ॥

रुक्मिण्यामभवत्पुत्रः प्रद्युम्न इति यो हरेः ।
स तदा प्राप वैदर्भीं रुक्मिपुत्रीं स्वयंवरे ॥ ५ ॥

रेमे सह तया धीमान् दमयन्त्या नलो यथा ।
अनिरुद्धमिति ख्यातं लेभे तस्यां सुतं च सः ॥ ६ ॥

ततो हरिस्स्वपौत्रार्थे वरयामास भीष्मकम् ।
रूपिणीं रुक्मिणः पौत्रीं विवाहोऽपि तयोरभूत् ॥ ७ ॥

ततः श्वशुरवचसा स्वसतीप्रार्थनया च जितोऽस्मीति वादिना वासुदेवेन भावुकेन तद्देव्या भगिन्या च सह ससैन्यो वादित्रघोषेण पितृपुरं प्रविश्य पूर्णप्रतिज्ञो रुक्मी दक्षिणापथवासिभिर्वेणुदारिप्रभृतिभिः राजभिरक्षक्रीडार्थं सुसम्बोधितः तैस्सह सभां निर्माय हरिणा सह सुखेन स्वपन्तं बलं तं बलादानाय्य तेन सह समारब्धाक्षद्यूतः काण्वकाजिते तस्मिन् बले स्वाक्षपराजिते वयस्यैः कृतकोलाहलो हृतसर्वस्वं जितमशरीरवाण्याऽपि विबुध्य स्वावशेषितबलरोषमात्रेणैव विजृम्भमाणस्य तस्य पदघट्टनया पृथिव्यां मशकशिशुकदशामाससाद ॥ ९ ॥

विनाशकाले विपरीतबुद्धि-
र्भवेदिति क्ष्मातलगः प्रवादः ।
न वै मृषा यत्स सदा हरेर्द्विट्
हितोऽप्यसक्तो हलिना हतोऽभूत् ॥ ८ ॥

अथ सुप्तोत्थितो नृहरिरग्रजं बलं किमपि नब्रुवन् विधेर्विक्रमं दुरतिक्रमं विदन् भैष्मीं भीष्मकमपि बहुशो विलपन्तौ सान्त्वयन् सधननिचयस्सानुगस्स्वपुरीमाजगाम ॥ १० ॥

तत्पूर्वमेव कदाचिद्दुर्योधनसुतां हरमाणो जाम्बवतीसुतस्साम्बो राजभिर्निगृहीत इति रुषाऽऽगत्य नागसाह्वयनगरवप्रोपरि निजहलं प्रसार्य तन्नगरं गङ्गाम्भसि प्रक्षेप्तुमारभमाणे प्रलम्बपरिपन्थिनि प्रविह्वलमतिः धार्तराष्ट्रस्सभार्यं शौरिसुतं समुत्सृज्य मङ्गलाशिसार्थमात्मानं तच्छिष्यतामुपनिनाय ॥ ११ ॥

ततः—

अहरदहह भौमः कुण्डले मे जनन्याः
जहि तमिति महेन्द्रेणार्थितोऽसुं मुकुन्दः ।
स्वसुतमपि निहन्तुं तत्पुरं द्राक् प्रतस्थे
स गरुडमधिरूढः सत्यया सार्धमीशः ॥ ९ ॥

अथ स गदाग्रजो निजभुजाग्रलसद्गदासिदरचक्रशोभया निस्तुलस्रगम्बराभरणशोभया च तारासरणिमवभासयन् गरुडगरुदुद्धूतेन वातेन वियच्चरविमानावलीरम्बुदपालीरिव सुदूरमपसारयन् दक्षिणां दिशमनुसरन् निजाध्वनिरोधिनीं रक्षोवरूथिनीं विध्वंसयन् विद्विषतामनुत्पादितभौमजयाशान् मौरवपाशान् विच्छिद्य मुरमपि सपुरस्सरं संहरन् शिलासङ्घानतीत्य निसुन्दं निषूद्य देवैस्सह सहस्रपरिवत्सरानारचितमहासमरं हयग्रीवाभिधासुरवरं विबुधजनमनोगदौ विरूपाक्षपञ्चनदौ च पञ्चतां प्रापय्य प्राग्ज्योतिषं पुरमुपगतः तज्जनान् पाञ्चजन्यनिनदैः बधिरीचकार ॥ १२ ॥

अथ हविरिव भौमस्तार्क्ष्यवेदीसमिद्धे
समरयजनभूमौ विष्णुवैतानवह्नौ ।
अनुचरसुसमिद्भिश्चक्रधारोल्कीले
सुरवरनुतिमन्त्रैर्द्राग्जुहावात्मदेहम् ॥ १० ॥

अथ भगवानपि भूम्या प्रत्यर्पिते अदितिमणिकुण्डले समादाय स्वनिहतस्य महीसुतस्य तस्यान्तःपुरं प्रविश्य तत्र तत्रसम्भृतं विविधमणिभूषणाद्यनेकवस्तुसमुदयं धननिचयं गजाश्वपूर्वं च निजपुरं नेतुं तदारक्षकगणानाज्ञापयन् कमपि मणिशैलमारुह्य तत्र सरुद्धिरा देवर्षिकन्यका च निजागमनं विज्ञाय नियमतस्तपस्यन्तीरात्मानमागतं विलोक्य पत्नीत्वेनारमाग्रहमभर्थयन्तीरसुरवरभुजबलोपनीताः गन्धर्वासुरकन्यकाः नैका अपि तद्रक्षकासुरवरकिङ्करवाहिताभिः शिबिकाभिर्द्वारकां प्रति प्रस्थापयन्मणिमयं तद्गिरिशिखरं च वारुणं छत्रं च खगपतिपृष्ठमारोप्य सभार्यस्स्वयमपि तमास्थाय प्रस्थितो गगनपथेन सुमेरुगतदेवतायतनश्रेणीमालोकयन्नेव त्रिदशपुरमासाद्य पुरन्दरसदनबाह्याङ्गण एव सत्यया सह निजरथादवततार ॥ १३ ॥

तौ दम्पती सुरपतिः परिगृह्य चक्रे
पूजां पुलोमसुतया सह भक्तियुक्तः ।
गत्वाऽदितेर्गृहममी वरकुण्डले ते
दत्वा प्रणम्य तत आपतुराशिषोऽग्र्याः ॥ ११ ॥

तदनु तदनुज्ञामादाय महिष्या सह यथापुरं खगपतिस्कन्धमास्थाय निजपुरं प्रति प्रस्थितो निखिलसुरर्षिभिस्स्वर्चितः स्वयमच्युतस्स पथि नन्दने वनमखिलमात्मना विद्योतयन्तं स्वमविधं प्रसर्पतां तनूभृतां पूर्वगन्धमपूर्वगन्धं च मनोघ्राणयोरुत्पादयन्तं सदोदितप्रसूनजातं पारिजातं तरुमवलोक्य तं महागज इव महाभुजः समुत्पाट्य निजरथं निश्शङ्कमारोपयन्नलक्षिततदारक्षकसुरनिकरसमितिमसुध्रमो निखिलचराचरप्रपञ्चप्रेक्ष्यमाणाद्भुतवैभवो यथावैभवं यादवगणैरभ्युद्गतः विविधसम्पदा विबुधमनःपूरकां द्वारकामाससाद ॥ १४ ॥

ततः पुनरपि पुरन्दरप्रार्थनया स्वस्तरुस्स्वस्थानमुपगतोऽभूत् ॥१५॥

अथ हरिरुपयेमे षोडश स्त्रीसहस्रा-
ण्यपि भुवि विविधैर्वै तासु रेमे यथेष्टम् ।
प्रतियुवतिनिशान्तं सर्वदाऽप्येकरूपः
प्रतिकुमुदवनान्तं पूर्णचन्द्रमाशीव ॥ १२ ॥

अथैकदा भीष्मकसुताया उपवासनियमान्ते दैवस्यवनान्ते स्वदारसुतपौरमण्डलीभिस्सह विविधालयात्रपात्राभरणदासस्यां प्रकृतेन सुविहितसर्वसर्वमहासुरमण्डलीसन्तर्पणे भगवति वासुदेवे, ॥ १६ ॥

अस्तौषीत्सुरमुनिरेत्य रुक्मिणीं तां
पार्श्वस्थां श्रियमवलोक्य लोकभर्तुः ।
दत्त्वैकं प्रियसुरु पारिजातपुष्पं
तत्तस्याः शिरसि बभौ यथेन्दुखण्डम् ॥ १३ ॥

सत्कारस्सदसि तथाविधस्सपत्न्याः
सत्यायाश्श्रवणमगात्फणीव भूस्याः ।
फूत्कारस्सपदि ततस्सखीसमाजे
यस्तस्यास्स च नृहरेर्यथा महाद्रेः ॥ १४ ॥

ततस्तत्क्षणमेव स सर्वतश्चक्षुः वीक्षामात्रतस्सन्नद्धं स्वरथमास्थाय रैवतकान्निर्गतः द्वारकायां सत्यागृहद्वारमुपगतस्स्यन्दनादवरुह्य शनैश्शनैश्शङ्कितहृदय एव तत्सखीजनैरन्तःप्रवेशितोऽसंवृत एव महीतले वियच्च्युतविद्युल्लतामिव तनूलतामुद्वहन्तीं दक्षेतरकरकमलनिक्षिप्तकपोलमूलतोऽक्षिमुकुलयुगलेनाश्रुस्रवन्तीमविरलमुत्सृजन्तीं सदसि संवृत्तं तं सपत्नीसन्मानमेव मनसि मुहुर्मुहुः विचिन्त्य पुनःपुनः निश्वसन्तीं निरस्तकर्णाभरणतया निजापरक-

कपोलस्थलीं निस्तारशारदनिशानभस्स्थलीमिव सन्दर्शयन्तीं पतिचरितं प्रत्या-त्मनो मोहमनुस्मृत्यासकृत्स्मयमानां सात्राजितीमालोक्य कथमिति चिन्तयाऽ-वस्थितस्सखायमिव तेन सहागतं पारिजातगन्धमाघ्राय विस्मयाविष्टहृदयतया दिशिदिशि दत्तनेत्रान्तया तया सरोषासूयादुःखातिरेकमालोकितः निर्दयम-तिनिष्ठुरया गिरा निर्भर्त्सितस्स्वापराधं कमपि स्वयमजानान इव स्वात्मन-स्तदेकायत्ततामेवानुवर्ण्य कथमपि तयैव प्रकाशितापराधः स च देवर्षिणोत्पा-दित इति निजनिष्कलङ्कतामापाद्य साम्नैव बहुशः प्रार्थयन्नप्यलब्धप्रसादस्तां पुनराश्वासयन् तत्सखीसमक्षं सस्मितमिदमभाषत ॥ १७ ॥

प्रादात्प्रिये कलहकल्पतरुस्स भैष्म्यै
यस्यैकमद्भुततमं कुसुमं सुरर्षिः ।
तं पारिजाततरुमेव तवाहरामि
सत्यं ब्रवीमि सुभगे! मयि सम्प्रसीद ॥ १५ ॥

इति सशपथमुक्तया रोषादिदोषपरिमुक्तया भक्तया तया सपदि पर-मादरेण सम्पूजितस्संक्रन्दनानुजः तत्रैव निजगृह्यकर्मणि सन्निविष्टोऽभूत् ॥

अथ नारदोऽपि भीष्मकसुतामामन्त्र्य तया सहैव द्वारवतीं प्रविश्य सात्राजितीसदनमुपगतस्तया सह केशवेन यथाविधि परिपूज्य परमासने स-न्निवेशितस्तदनुयोगेन तत्पारिजाततरोः प्रभवं प्राभवं चेत्थमकथयत् ॥ १९ ॥

असृजददितिहेतोः कश्यपः पारिजातं
तमदितिरपि शच्याः पुण्यहेतोः सुतेऽदात् ।
अथ हरवरतोऽभूत्तस्य शच्यर्थमेव
स्थितिरुपवनदेशे सर्वदा वासवस्य ॥ १६ ॥

विविधकुसुमगन्धान् गीतवादित्रनादान्
धनकनकमणीनां भूषणानां च राशीन् ।
दिशति निखिलकामान् कामरूपी स वृक्षः
सुरनरवरभोग्यानन्नपानादिकांश्च ॥ १७ ॥

अथ हरिरिदमूचे पारिजातं द्रुमं तं
सुरपतिमभियाचे सोऽनुजे चेत्कृपालुः ।
वितरति बत नो चेदाशु कौमोदकी मे
विहरति युधि नीचेत्यस्य वक्षस्थनीचे ॥ १८ ॥

एतदाकर्ण्य तद्गिरा पुनः सुरमुनिस्त्रिविष्टपं प्रविष्टः शिपिविष्टमहोत्सवे सदसि समुपविष्टस्य हरिहयस्याग्रतो हरिगिरमुद्गिरन् रहसि मुहुर्मुहुर्नयमुपदिशन्नप्यसम्बुद्धनिजहिते तस्मिन् पुनरपि कुशस्थलीं प्राप्य नृहरेः पुरः पुरन्दरगिरमेवं व्याजहार ॥ २० ॥

मम सकलसमृद्धिस्सोऽनुजश्चेत्तदीया
भवतु हरतु नैतं पारिजातं त्वयुध्वा ।
बत बत कथमेकं वत्सरं वा सहेऽहं
दिवि भुवि गुणसाम्यं कारितं स्त्रीजितेन ॥ १९ ॥

एतदाकर्ण्य कृतसमितिनिश्चये श्रीपतौ कलहविशारदो नारदः कृतकृत्य इव ततोऽन्यतोऽभूत् ॥ २१ ॥

तमुदन्तं समाकर्ण्य सुरेन्द्रगुरुणोदितम् ।
कश्यपोऽस्तुवदीशानं भाव्यं च बुबुधे ततः ॥ २० ॥

अथ मधुसूदनो मृगयाभिषेण रैवतकगिरिमुपगतस्तत्र ससारथिं निजरथं निक्षिप्य पक्षीन्द्रमधिरुह्य सात्यकिरौक्मिणेयाभ्यां सह वियदुत्पत्य विबुधोपवनमाश्रितः तत्रत्यं पराजितनिजाश्रितारिजातं पारिजातं तदनुत्पाट्य खगपतिमलङ्कुर्वाणस्तदागतसुरनिकरहाहाकारबहुलनिःशङ्कगीर्वाणगणैस्सविस्मयातिशयमीक्ष्यमाणस्तत्प्रहरणाय मुहुर्मुहुरापतन्तौ प्रद्युम्नसात्यकी पक्षिप्रवरपक्षद्वयसहायाभ्यां सात्यकिप्रद्युम्नाभ्यां पराजित्य स्वयमैरावतगजस्कन्धवर्तिना सहस्राक्षेण सह सुरैर्वीरैः सुचिरं शस्त्रास्त्रपरम्पराभिर्विरचितसमरोऽपि ततः वैनतेयपदप्रहारविह्वलिताङ्गेन मातङ्गेन सह पारियात्रमहीधरशिरसि निपतन्तं सुरपं तं जङ्घानिल इव जलधरमनुससार ॥ २२ ॥

तत्रापि युद्धमभवन्महदद्भुतं च
विक्रान्तयोर्नृहरिवासवयोर्निमाने ।
श्रान्तोऽभवत्सुरपतिस्स यदा दिनान्ते
शान्तं ततो द्विविधयोः परिकुञ्जनम् ॥ २१ ॥

अथ तस्यामेव निशायां पुष्कराभिषेकं कुर्वन् स्वर्धुनीरोधसि बिल्वोदकेनावाहितो बिल्वोदकेश्वरः स्वयं प्रत्यक्षीभूय पारिजातकुसुमैरात्मानं सम्पूज्य संस्तुवन्तं हरिं तं जयकाङ्क्षिणमभिनन्द्य कतिचिन्नगरीदेशसंछन्नानवध्यान् षट्पुरनगरवासिनो दानवान् हन्तव्यानादिश्यान्तर्हितोऽभूत् ॥२३॥

अथ गिरिरपि हरिस्सर्वदा स्वनिवासभावेऽस्थितवान् ॥ २४ ॥

ततः प्रभाते पुनरपि तयोरिन्द्रोपेन्द्रयोः महायुद्धे प्रवृत्ते ब्रह्मणोऽनुज्ञया देवमात्राऽदित्या सह कश्यपः कदनभुवमाजगाम ॥ २५ ॥

दृष्ट्वा तौ पितरौ विसृज्य सहसा शस्त्राणि धात्रीं गतौ
प्रेक्ष्योवाच सुतौ तदाऽदितिरिदं प्रेम्णा परिष्वज्य तौ ।
सौभ्रात्रं युवयोस्सदाऽस्तु नृहरे सत्यामुदे वत्सरं
भूमौ तिष्ठतु पारिजातसुतरुः पश्चाद्दिवं गच्छतु ॥ २२ ॥

अथ हरिरपि तद्गिरं तथैवेत्यनुमोदमानः शच्या सह सुरेन्द्रेण मातृगिरा समर्पितैः दिव्याभरणजातैस्सह पारिजातं सात्यकि-प्रद्युम्नौ च पतगेन्द्रस्कन्धे पुरस्कृत्य परिपूर्णमनोरथः स्वरथेन निजनगरमासाद्य तत्सर्वं सत्यासदनमनीनयत् ॥ २५ ॥

देवस्त्रीणां हिमक्ष्माधरवरतनया यद्विधानं पुरोचे
भैष्म्यादीनां पुरस्तादमरमुनिरपि प्राह पृष्टो यदाभिः ।
यत्कर्तव्यं सतीभिः परमनियमतः सुव्रतं पुण्यकाख्यं
तत्कर्तुं सत्यभामा व्यवसितहृदया हर्षयुक्ता बभूव ॥ २३ ॥

सा वीक्ष्य विस्मितवती वरपारिजातं
सस्मार तं सुरमुनिं समुपागतेऽस्मिन् ।
सम्पूज्य तं तरुममुं च सुरर्षिमस्मै
प्रादाद्धरिं सुरतरौ सुमदामबद्धम् ॥ २४ ॥

अथ नारदोऽपि तं प्रतिगृह्य निजानुगं विधाय तस्मिन्निजनियोगं कञ्चिददर्शयत् ॥ २७ ॥

कृष्णोऽवदत्तदनु देवमुनिं वशोऽस्मि
किं ते प्रियं स्मर करोमितरामितीशः ।

प्रीतिं स्वलोकविनिवासमयोनिजत्वं
विप्रत्वमप्यदिशदीप्सितमेव तस्मै ॥ २५ ॥

सत्या यथेष्टमखिलान्यपि सा सपत्नी-
सङ्घेभ्य एव विविधाभरणानि दत्वा ।
कामैस्सुपूर्णहृदया सुतरां विजह्रे
पाञ्चालराजसुतया च सुभद्रया च ॥ २६ ॥

हरिरपि ससुहृद्भिर्ज्ञातिसंबन्धिवर्गैः
पुरजनपरिवारैस्संयुतो द्वारकायाम् ।
नरवरदुरवापैः कामभोगैर्विचित्रैः
निमिषमिव स रेमे याप्यवब्दमेकम् ॥ २७ ॥

अथ गरुडेन तं तरुं त्रिदशवनमुपनयन् पुण्डरीकनयनः सहस्रनयन-
मिदमवादीत् ॥ २८ ॥

शर्वादिष्टं तदिह सहसा कर्तुकामोऽस्मि वज्रि-
न्नन्तर्भूमौ रहसि वसतो दानवान् यामि हन्तुम् ।
देवावध्या द्रुहिणवरतो मायिनस्ते च दैत्याः
मायावेदी प्रवर इह यस्सोऽस्तु साकं मयाऽद्य ॥ २८ ॥

तथेति बलशत्रुणा सपदि दत्तमेनं नयन्
किरीटमपि कुण्डले शिरसि कर्णयोस्संवहन् ।
सहस्रमिहिरोदयश्रियमथाम्बरे दर्शय-
न्नवाप नगरीं निजां निजरथेन नारायणः ॥ २९ ॥

आवर्तीयास्तटभुवि तदा देवदत्तस्य गत्वा
यज्ञारम्भे द्रुतमनुचरैः षट्पुरस्थो निकुम्भः ।
सोमं कन्याः प्रदिश मणिभिर्नस्त्वमस्यान्यथात्वे
यज्ञो मा भूदिति तमरुणत्कन्यकाश्चाजहार ॥ ३० ॥

तमुदन्तं हरिर्ज्ञात्वा वसुदेवेन च स्मृतः ।
प्रद्युम्नं प्रेषयामास तत्र पश्चात्स्वयं ययौ ॥ ३१ ॥

प्रद्युम्नोऽपि स ताः कन्याः मायाकन्याभिरुद्धृतम् ।
निकुम्भं वञ्चयन्वेगात्पित्रन्तिकमनीयत ॥ ३२ ॥

अथ विधिसुतवाग्भिः प्रेरितोऽसौ निकुम्भः
शरणमुपगतोऽभूत् क्षत्रबृन्दं समेतम् ।
यदुगणरणभीतस्तत्र यज्ञोपहूतं
ददुरभयममुष्मै पार्थिवाः पाण्डवान्ये ॥ ३३ ॥

अथ हरिरतिवेगात्सेनया भीमयाऽगा-
दवितुमरिनिरोधाद्देवदत्तस्य यज्ञम् ।
क्रतुभुवमभितोऽधात्पाण्डवान् भूरिसैन्यान्
दिवि सुतमपि मायावेदिनं रौक्मिणेयम् ॥ ३४ ॥

निहितनिखिलसैन्यः षट्पुरद्वारदेशे
प्रवरमपि जयन्तं व्योमरन्ध्रे निवेश्य ।
स्वयमपि धृतशार्ङ्गः शौरिराशीविषारेः
भुजशिरसि विरेजे सीरभृत्सात्यकिभ्याम् ॥ ३५ ॥

ततस्तत्क्षण एव तत्सैनिकाभिहतभेरीमृदङ्गादिरवमसहमानेष्विव निकुम्भप्रमुखदानवयोधेषु विविधायुधान्यादाय विचित्रतरवाहनैर्गुहामुखाद्बहिर्निर्गतेषु, ॥ २९ ॥

पादाघातचलन्महीपृथुभरश्रान्ताष्टदिग्वारणो
ज्याघोषैश्च जयाट्टहासनिनदैर्ब्रह्माण्डमापूरयन् ।
नानाशस्त्रशरप्रहर्षतिमिरव्यापारमुग्यारुणो
भूमौ यादवदानवप्रकरयोरासीद्रणो दारुणः ॥ ३६ ॥

अथ युधि यादवानीकं निर्जित्य तत्र कांश्चन गुहान्तरे विनिर्बध्य वियति विजृम्भमाणानां दानवानां रणरङ्गसङ्गतेषु केषुचिच्छार्ङ्गिशिखिशरार्चिषि शलभायितेषु दिवि पलायनपरेष्वपरेषु प्रवरशरप्रकरनिकृत्तकन्धरेषु दिशिदिशि धावमानेष्ववशेषितेष्वपि जयन्तशरपरम्परासंचूर्णितेषु, ॥ ३० ॥

समरभुवि निकुम्भः कुम्भवत्पूर्णवेगान्
हरिशिरसि शरौघान् पातयन् जृम्भमाणः ।
तदतिनिशितबाणैर्भिन्नगात्रोऽन्तरिक्षं
न्यविशत स जयन्तस्तेन युद्धं प्रचक्रे ॥ ३७ ॥

अथ निकुम्भः कुम्भ इव जयन्तेन भुवि निपात्य निगृहीतोऽपि तस्मात्कथंकथमवमोचितः मुकुन्देन सह समरमाकाङ्क्षमाणः प्रद्युम्नेन मायागुहायां पशुपतिपाशनियन्त्रिततया प्रतिश्रुतमुपेक्ष्य पेटिकायामहिबृन्दमिव निजपटवाटिकायां निष्पन्दं क्षत्रबृन्दं निर्भर्त्स्य निष्ठुरतरप्रहारविह्वलीकृतबल-कृष्ण-पाण्डवो वितथीकृतपार्थप्रयत्नः स्वगुहामाविवेश ॥ ३१ ॥

अथ कृष्णोऽपि निजैस्सह तद्गुहामनुविशन् तत्र पुरोपरुद्धान् यादवान् पुत्रोपरुद्धानन्यान् राजन्यांश्च प्रविमोचयन् निकुम्भेन तेन सह विरचितविचित्रायोधनः तच्छिरश्शरीरमेवं गगनगिरा निजारिधारयोत्कृत्य शतक्रतुश्शतधारधारया गिरेः शृङ्गमिव भुवि न्यपातयत् ॥ ३२ ॥

ततः—

दिवि सुरवरसङ्घैर्दिव्यवादित्रनादैः
हरिशिरसि विसृष्टा पुष्पवृष्टिः प्रकृष्टा ।
भुवि च सुजनसङ्घैस्तद्वदत्यन्तमोदैः
निजवपुषि विसृष्टा बाष्पवृष्टिः प्रकृष्टा ॥ ३४ ॥

कन्यारत्नैश्च रत्नैः प्रतिसदनगतैः षट्पुरे दानवानां
सर्वान् राजन्यसङ्घानपि निजसुहृदः पूर्णकामान् विधाय ।
स्थानेऽस्मिन् स्थापयित्वा ह्यथ सुकृतमखं देवदत्तं पुरीं स्वां
प्रायाद्बिल्वोदकेशं स्तुतिनर्तितनटैस्तोषयन्नाप्तकामः ॥ ३९ ॥

देवावध्यं दितिर्यं भुवि बत सुषुवे कश्यपं तोषयित्वा
योऽसौ लोकांश्च सर्वान् सुरमुनिवचसा मन्दरं चोन्ममर्द ।
तस्मिन् ध्वस्तेऽन्धके प्राक्त्रिपुरविजयिनः शूलपातेन यद्व-
त्तद्वद् ध्वस्ते निकुम्भे सपदि जगदभूद्विज्वरं चातिहृष्टम् ॥४०॥

## इति श्री हरिवंशचम्पौ षष्ठो विलासः

—* समाप्तः *—

# अथ सप्तमो विलासः ॥

-:o:-

हरिर्द्वारवतीं प्राप्य मुमोद यदुभिर्वृतः ।
सुरेन्द्रस्स्वपुरीं प्राप्य सुरैरिव गतज्वरैः ॥ १ ॥

पुर्यां निवेश्य वसुदेवमथाहुकं च
यात्रा कदाचिदुदधिं प्रति संप्रवृत्ता ।
सान्तःपुरस्य नृहरेर्यदुभिर्वृतस्य
सर्वैश्च पौरमिथुनैर्गणिकागणैश्च ॥ २ ॥

क्रीडा बभूव लवणाम्बुधितोयमध्ये
द्राग्द्वन्द्वशो विहरतां यदुपुङ्गवानाम् ।
दिव्याम्बराभरणरूपवयोविलासैः
रम्या गुणैर्वियति विस्मयदा सुराणाम् ॥ ३ ॥

गलगतवनमालः पानलोलाक्षितारः
सुरुचिरमदखेलः स्कन्धविस्रस्तचेलः ।
विधुरिव बलदेवस्तत्र विक्रीडमानो
जलधिपयसि सोऽभाद्रेवतीरम्यरूपः ॥ ४ ॥

हरिरिह तु विरेजे हासनानाविलासैः
प्रतियुवतिकदम्बं स्त्रीसहस्रैः परीतः ।
विमलपयसि सिन्धोर्व्यक्ततारासहस्रै-
रुडुपतिरिव राकाशर्वरीष्वभ्रमध्ये ॥ ५ ॥

पुनरपि स विरेजे फुल्लनीलाम्बुजाभैः
हसितलसितकान्तारत्नसंयोगरम्यैः ।
प्रतियुवति विभिन्नैरात्मरूपैरनन्तैः
प्रतिफलितमतारव्योमखण्डैरिवाब्धौ ॥ ६ ॥

यदि बहु गलदघ्नं जानुदघ्नं मितं चेत्
सुरभिलमतिशुद्धं रत्नयादोऽनुविद्धम् ।
अभवदलघुवीचीवज्रपर्यङ्कमम्भः
प्रविशति महिषीभिर्माधवे सर्वतोऽब्धिम् ॥ ७ ॥

जलधिपयसि सर्वे रत्नशैलं वनाढ्यं
मणिभवनविमानव्यूहमन्नादिकं च ।
अथ च सकलभोगान् प्राप्य हृष्टा यथेष्टं
प्रियरतिपरितृप्ता गानसक्ता बभूवुः ॥ ८ ॥

इति सुरनरचेतस्तत्र सन्दिग्धमासीत्
स्थल-जल-वन-लीलाशैल-सद्मादिरूपैः ।
जलनिधिरुपतस्थे किं नु लक्ष्मीपतिं तं
मुररिपुरथवा तैः स्वाश्रितं स्त्रीकदम्बम् ॥ ९ ॥

रुचिरखचरयादोरूपदारुप्लवैस्ता
विविधगतिविदग्धाश्चेरुरब्जायताक्ष्यः ।
करधृतजलयन्त्रैस्स्नापयन्त्यो मिथोऽब्धौ
मुहुरपि धुरि शौरेः सूक्ष्मवस्त्रावृताङ्ग्यः ॥ १० ॥

सुरमुनिरपि चित्रं तत्र शौरेः पुरस्तात्
करधृतजलयन्त्रैस्सत्यया सिक्तगात्रः ।
पिक इव सुविपञ्च्या पञ्चमं गायमानः
शुक इव शुभवाचं व्याहरन् वै चचार ॥ ११ ॥

जलधिरथ विमानैः खे सुराणां सहस्रैः
पयसि पृथुपताकाशोभितैर्नौसहस्रैः ।
यदुयुवतिसहस्रैरप्सरस्त्रीसहस्रैः
वृत इव स तदाऽभाच्चन्द्रतारासहस्रैः ॥ १२ ॥

रासो लास्यं द्वयमतितरां तालमानानुसारि
व्यूहे व्यूहे समजनि हरेः कीर्तिचर्यानुकारि ।
भूयोभूयः प्रतिसुरनरं तद्बभूवातिरम्यं
चित्राम्भोधौ मृडमुखजगन्मग्नमासीत्तदानीम् ॥ १३ ॥

पार्थोऽपि तत्र पुरुषोत्तमपार्श्व एव
स्थित्वा तदा सुविहरन् ससुभद्र एव ।
स्वर्गापवर्गसुखमल्पममंस्त धीमान्
स्वानन्दमद्भुततमं परमं प्रपन्नः ॥ १४ ॥

नन्दोऽपि तत्र सह गोपगणैरकस्मा-
द्राश्चारयन्नुपगतोऽम्बुनिधेस्तटान्तम् ।
सम्मानितोऽथ हरिणा सहसा निजैस्तैः
क्रीडन् जले मुदमवाप परैर्दुरापाम् ॥ १५ ॥

एवं विहृत्य सलिले स हरिस्सुरौघै-
स्तूर्यस्वनेन जलदैरिव पुष्पवर्षैः ।
वृष्टः प्रहृष्टमनसा तटमाप सिन्धोः
पूर्वाद्रिमिन्दुरिव तत्किरणा इवान्ये ॥ १६ ॥

पौरोगवस्य वचनादथ सूदमुख्यैः
क्लृप्तं समस्तमुपभुज्य सभक्ष्यमन्नम् ।
मांसादिकं च मिलिता यदवोऽङ्गनाभिः
पीत्वा च पेयमतुलं हृषिता बभूवुः ॥ १७ ॥

गान्धर्वमत्र महदद्भुतमाविरासी-
दङ्गेषु दिव्यमखिलागमसारवर्षि ।
तत्रैव मग्नहृदया यदवो निशाया-
मात्मानमप्यहह नो विदुरन्यदास्ताम् ॥ १८ ॥

एतदन्तरमासाद्य निकुम्भो नाम दानवः ।
पुरे भानुमतीं कन्यां जहार निजमायया ॥ १९ ॥

वसुदेवाहुकाभ्यां च विज्ञापिततदक्रमः ।
ससुतस्साऽर्जुनोऽगात्तं गरुडेन त्रिविक्रमः ॥ २० ॥

स निकुम्भोऽपि तां कन्यां मह्याममुञ्चन्नेव निजगदां तेषु विमुञ्चन् तच्छरपरम्परया निर्दयमर्द्यमानो माययाऽन्तर्हितोऽपि तैरनुगत एव पुनः शकुनीभूय सर्वां भुवं परिभ्रमन् गोकर्णस्योपरिष्टाद्गङ्गापुलिने कन्यया सह पपात ॥ १ ॥

एतदन्तरमासाद्य प्रद्युम्नः शीघ्रविक्रमः ।
जहार भानुपुत्रीं तां सुधामिव सुरर्षभः ॥ २१ ॥

असुरश्शरजालेन कृष्णाभ्यामर्दितस्तदा ।
ज्ञातीनामालयं प्राप षट्पुरं स वृथोद्यमः ॥ २२ ॥

ततस्तां कन्यां निजपुरं प्रापय्य प्रत्यागतेन प्रद्युम्नेन सह षट्पुरद्वारमुपरुध्य गर्जति सवासवात्मजे वसुदेवात्मजे ॥ २ ॥

निर्ययौ स बिलात्तस्मान्महागिरिरिवासुरः ।
वासव्याद्यास्तमासेदुः शरजालैरिवाम्बुदाः ॥ २३ ॥

अथ महासुरो निकुम्भः सपदि निजगदाप्रहारैर्विसंज्ञौ प्रद्युम्नपार्थौ क्रमेण रणभुवि पातयन् कौमोदकीविलसितविग्रहेण हरिणा सह दुर्वारेणाग्रहेण सुचिरमारचितगदारणो निजरणचातुर्यमदमाधुर्यपरवशीकृतनिर्जरद्विरेफनिकरकरम्बितगगनरङ्गाङ्गणो वारण इव विजृम्भमाणः तद्गदाप्रहारेण विसंज्ञ इव विद्योतमाने भगवति वासुदेवे तस्मिन् सोयं सेवासमय इति वासवेन सामृतेन गगनगङ्गाम्भसा संसेविततया प्राप्तप्राण इव सरभसमुत्थाय निजवधायात्तचक्रे प्राणरिरिक्षिषया मृत इव भुवि निजां तनुमपहाय माययान्तर्हितोऽभूत् ॥३॥

अथ हरिरपि प्राप्तसंज्ञाभ्यां पार्थरौक्मिणेयाभ्यां सह सम्भाषमाणः तदसुरशरीरं शनैश्छेत्तुमारभमाणो दिवि च भुवि चायुतमयुतं निकुम्भानां पुनस्तद्गृहीतानां धनंजयादीनामात्मनां च समीक्षमाणो मायाविनस्तस्य निजस्थितिमनवेक्षमाणो विमुह्यन्निव निमिषमितस्ततो वीक्षमाणः क्षणेन पुनस्तमरिं दिव्येनैव चक्षुषा तत्त्वतो निरीक्ष्य निजारिधारया तच्छिर आजहार ॥ ४ ॥

एवं निहत्य स निकुम्भमगुं द्वितीयं
संसान्त्वयन् स्वसखमर्जुनमब्जनाभः ।

सार्धं सुतेन गरुडेन समूह्यमानः
स्वामाजगाम नगरीं परिपूर्णकामः ॥ २४ ॥

तदनु स निकुम्भारातिः नारदगिरा तस्याः भानुमत्याः दानवग्रहण-मोचनहेतुभूतं रैवतकोद्यानभुवि संवृत्तं महर्षेः दुर्वाससः शापानुग्रहोदन्तं विज्ञाय तां कन्यां माद्रीसुताय सहदेवाय दापयामास ॥ ६ ॥

तत्पूर्वमेव कदाचिद्वज्रनाभो नाम दानवः कश्चन चतुराननवरादमरा-वध्यतां किमपि मणिमयं वायोरप्यसुलभप्रवेशनिर्गमं वज्रपुरमपि संप्राप्य दुर्मतिरतिदुर्वारेण गर्वेण सुरपतिमासाद्य कश्यपसुतसाधारणीं त्रिभुवन-राज्यलक्ष्मीं सम्प्रार्थ्य पित्रनुज्ञामपेक्षमाणे तस्मिन् काश्यपमुपगतः तेनापि यज्ञसमयमाख्याय सम्प्रेषितः तद्यज्ञान्तसमयमनुपालयन्निजनगरमाससाद ॥

शतक्रतुरपि सत्वरं द्वारकामुपगम्य निखिलमपि तमुदन्तं शौरये निवेद्य निजालयमुपागमत् ॥ ७ ॥

तदैव वसुदेवस्य वाजिमेधे महाक्रतौ ।
भद्रो नाम नटः कश्चिन्नाटयेनातोषयन्मुनीन् ॥ २५ ॥

सर्वदिग्गमने शक्तिमवध्यत्वादिकं च सः ।
वरं प्राप्य मुनीन्द्रेभ्यश्चचार निखिलां भुवम् ॥ २६ ॥

तदनु महेन्द्रप्रेरणया केषुचिद्राजहंसेषु त्रिविष्टपाद्वज्रनगरमासाद्य वज्रनाभानुमतेन तदन्तःपुरोपभोग्यासु योग्यासु वापीष्वितस्ततस्सञ्चरत्सु ॥

मानुषालापिनस्तांस्तु वीक्ष्य सर्वेऽपि रेमिरे ।
स्त्रियो विशेषात्तत्रापि राजपुत्री प्रभावती ॥ २७ ॥

ततश्शुचिमुखी नाम राजहंसी प्रभावतीम् ।
कथाभिरभिरामाभिः प्रीणयन्तीदमब्रवीत् ॥ २८ ॥

अयि सखि! चारुहासिनि स्वयंवरानुमोदिनि कुतो नाद्यापि देवासुरकुलसमुद्भवेषु स्वानुरूपरूपिणं पतिं कमपि कामयसे; किमर्थमेतद्गमयसि वृथैव यौवनं; कथं नाद्यापि श्रुतिपथमागतस्तव कुलरूपशीलसम्पदामनुरूपः प्रद्युम्नः? ॥ ९ ॥

देवेषु देवमसुरेष्वसुरं वरिष्ठं
मर्त्येषु मर्त्यमुरुधैर्यमवार्यशौर्यम् ।
धन्याऽसि चन्द्रमुखि शम्बरघातिनं तं
कामं प्रकाममिह कामयसे यदि त्वम् ॥ २९ ॥

एवं निशमितरौक्मिणेयरूपगुणवैभवा तत्प्रभावमेव मुहुर्मुहुर्मनसि भावयन्ती तत्समागममभिलषन्ती तदुपायमर्थयन्ती स्मृतमपि तत्पितृवैरमगणयन्ती सा निजसख्याः शुचिमुख्याः कथाकौशल्यं तत्प्रार्थनया स्वपित्रे न्यवेदयत् ॥ १० ॥

अथ वज्रनाभोऽपि तत्कथाश्रवणकुतूहलेन तां हंसीं निजगृहं प्रत्यानयन् विविधाः कथाः कथयन्त्यास्तस्याः कथान्तरे महर्षिभिः प्राप्तवरस्य भद्रनाम्नो नटस्य देवगन्धर्वगेयेषु गानेषु च नानाविधेषु नाट्येषु च महतीं निपुणतामाकर्ण्य तदानयनाय कांश्चन राजहंसानचोदयत् ॥ ११ ॥

तेऽपि मरालास्तत्क्षणमविरलकुतूहलेन तत्पुरान्निर्गत्य तमुदन्तं महेन्द्राय निवेद्य तदाज्ञया द्वारवतीमुपेत्य तत्सर्वं माधवाय व्यजिज्ञपन् ॥ १२ ॥

अथ कृष्णेन सन्दिष्टाः प्रद्युम्नाद्याश्च यादवाः ।
नटवेषेण संछन्नाः प्रापुर्वज्रपुरं क्रमात् ॥ ३० ॥

नटीभिर्वारमुख्याभिः प्रद्युम्नाद्यैर्नृपैरपि ।
विदूषकेन साम्बेन वाहुकेन गदेन च ॥ ३१ ॥

भद्रेण तत्सहायैश्च नारदेन महात्मना ।
बद्धेन केशवगिरा वज्रनाभसभा बभौ ॥ ३२ ॥

तत्र रामायणं ते तु गङ्गावतरणं तथा ।
रम्भाभिसारं कौबेरं प्रायुञ्जन्नाटकं नटाः ॥ ३३ ॥

ततः----

सदसि समुपविष्टैः वज्रनाभस्य तुष्ट-
रसुरकुलविशिष्टैर्द्राङ्नटेभ्यो विसृष्टैः ।
सुरुचिरवसनानां राशिभिर्भूषणानां
विरचित इव सेतुर्गीतमाधुर्यसिन्धौ ॥ ३४ ॥

अथ ते नटाः प्रावृत्तटाका इव परिपूर्णजीवनाः राज्ञा वज्रनाभेन तदन्तःपुरजनेन च बहुशस्सम्भानितास्तद्दत्तानि धनकनकवस्तुवाहनादीनि च संगृह्य तत्रैव मणिमयभवनेषु सुरुचिरमरमन्त ॥ १३ ॥

तदैव राजसुता प्रभावती निजसख्या हंसनन्दिन्या द्वारवत्यास्स्वागमनमावेद्य 'चिन्तितं सफलम्; अद्य प्रदोष एव प्रद्युम्नेन सह सङ्गच्छसे' इत्यभिहिता प्रमोदाम्बुधिनिमग्नता हर्म्योपरि तदागमनाय कृतसंविधाना विचित्राभरणपरिधाना प्रियागमनं प्रतीक्षमाणा तस्मिन् चिरयति सति तद्विरहानलेन विप्लोष्यमाणा तां सखीं गद्गदमिदमवादीत् ॥ १४ ॥

हा! कष्टमद्य मदनः किरतीह बाणान्
प्राणान् हरत्यपि मृदुः श्वसनो ममैषः ।

चन्द्रोऽपि पुष्कलमसौ स्वमयूखजालैः
दावाग्निमुत्सृजति हा सखि! किं करोमि? ॥ ३५ ॥

हा! किं विमुह्यति मनो मम जातकम्पं
का वा सखि प्रजनिता रुगनौषधेयम् ।
पश्यामि चेन्न मुखमिन्दुसखं प्रियस्य
यास्यामि तां गतिमवाप कुमुद्वती याम् ॥ ३६ ॥

अथ प्रद्युम्नोऽपि तत्पूर्वमेव स्मृतहंसनन्दिनीसन्देशः स्वावासदेशान्नि-ष्क्रम्य राजपुत्र्यै नीयमानं माल्यमनुसरद्भिः षट्पदैस्सह स्वयमपि मायया षट्पदीभूय हर्म्यान्तरं प्रविष्टः सायमिति निर्गतेषु तेषु सहचरभृङ्गेषु तत्कर्णा-वतंसकुवलयं प्रविश्य तत्रैव निलीयमानस्तस्यास्तादृशीमवस्थामसहमानः स्वा-गमनं तत्सख्यै सूचयन् तदनुमत्या तस्याः प्रभावत्याः पुरः प्रादुरभूत् ॥ १५ ॥

सा तं निरीक्ष्य सहसा महसाऽस्य दिग्धा
मुग्धा विनम्रवदनाऽर्धनिमालिताक्षी ।
नोवाच किंचन निरुद्धनितान्तहर्षा
कादम्बिनी भृतजलेव निरुद्धवर्षा ॥ ३७ ॥

तां प्रसाद्याथ यत्नेन गान्धर्वविधिनैव सः ।
सङ्गृह्य रेमे तत्रैव तया सह चिरं सुधीः ॥ ३८ ॥

तद्वज्रपुरवृत्तान्तमिन्द्राय हरयेऽपि च ।
प्रत्यहं प्रापयामासुः हंसास्ते हि मनोजवाः ॥ ३९ ॥

भ्राता तु वज्रनाभस्य सुनाभ इति दानवः ।
आसीद्धैर्ये च शौर्ये च तस्मादनवमो बली ॥ ४० ॥

तस्य कन्याद्वयं चासीदेका चन्द्रवती तयोः ।
अन्या गुणवती ताभ्यां दृष्टा सैषा प्रभावती ॥ ४१ ॥

रतिसक्तेव सा दृष्टा पश्चात्पृष्टा च धीमती ।
सखीभ्यां प्राह ते कन्ये सुधासिक्तमिदं वचः ॥ ४२ ॥

निवसति मयि विद्याऽलम्मि दुर्वाससो या
सकलमिदममुष्याः प्राभवादेव लब्धम् ।
यदि रुचिरिह वां तां दातुमीशे यदास्था
भुवि निजवशगास्स्युर्देवगन्धर्वयक्षाः ॥ ४३ ॥

ते कन्ये तां गिरं श्रुत्वा विद्यां तां परिगृह्य च ।
गदं साम्बं च सम्प्राप्य रतिमापतुरुत्तमाम् ॥ ४४ ॥

अथ जलदसमूहैः क्रान्तरोदोतरालाः
अविरलजलधाराच्छन्नदिक्चक्रवालाः ।
स्फुटकुटजकदम्बाः केऽपि कादम्बदूरा
भुवि मुदितमयूरा वासराः प्रादुरासन् ॥ ४५ ॥

प्रभावत्या युतः कार्ष्णिः चन्द्रवत्या युतो गदः ।
गुणवत्या युतस्साम्बस्तत्र ते रेमिरे परम् ॥ ४६ ॥

वज्रनाभोऽथ यज्ञान्ते कश्यपं वीक्ष्य काङ्क्षितम् ।
ब्रुवन् व्यर्थे तदर्थे तु दिग्जयाय मनो दधे ॥ ४७ ॥

ततः—

स्वप्रियासु सगर्भासु भीतास्ते यादवास्सुतान् ।
इन्द्रोपेन्द्रवरात्प्रापुः सद्यः सम्प्राप्तयौवनान् ॥ ४८ ॥

प्रद्युम्नस्तु प्रभावन्तं गदश्चन्द्रप्रभं तथा ।
साम्बस्तु गुणवन्तं च पुत्रांस्ते प्रापुरुत्तमान् ॥ ४९ ॥

तदनु हर्म्योपरि प्रवर्धमानांस्तान् हरीच्छया तत्पुरगगनरक्षिणो निरीक्ष्य सम्भ्रान्ताः सपदि दिग्विजयैषिणे दानवेन्द्राय न्यवेदयन् ॥ १६ ॥

एतदाकर्ण्य विस्मितमतिरसुरपतिः किमिदमिति मनसि विचिन्तयन् सुरमुनिमुखादाकर्णितनिखिलवृत्तान्तः कृतान्त इव संज्वलन् सत्वरमात्मसेनां संनह्य तत्कपटनटकुक्कुटान् गृह्णीध्वमिति निजभटानाज्ञापयामास ॥ १७ ॥

अथ यादवा अपि स्वस्वयुवतिभ्यो जयाशीर्भिस्सह समासादितसमुज्ज्वलहेतयो दावाग्नय इव दानवसेनागहनमभजन्त ॥ १८ ॥

अथ युद्धे प्रवृद्धे तु भैमदानवयोस्तयोः ।
प्रद्युम्नतेजसा कीर्णा मही दानवमस्तकैः ॥ ५० ॥

इन्द्रोऽत्र सामरगणस्सहसोपसृत्य
मायारथेन दिवि दानवसैन्यमूर्ध्नि ।
विष्वक्करन्तमभुमस्य रणे सहायं
पुत्रं जयन्तमदिशत्प्रजगाद चैवम् ॥ ५१ ॥

सूतेन मातलिसुतेन युतं रथं मे
दास्यामि युद्धकृतु गदस्तमवाप्य दैत्यैः ।
साम्बोऽपि गच्छतु मम प्रवरेण युक्तं
दिव्यं गजं समधिरुह्य रणाय वीरः ॥ ५२ ॥

अथ तां गिरमाकर्ण्य कार्ष्णिस्तत्क्षणएव जयन्तेन सह तां दानवचमूं निर्भिद्य हर्म्यान्तमागतो गदसाम्बयोस्तौ रथगजौ प्रदाय हरिरपि पुरेऽद्य

रुद्रोपहारं सम्पूर्य श्वस्समेष्यतीत्यभयमभिधाय दानवोपसृष्टं विशिष्टं तमस्स्वमायया सपदि नाशयन् निजसमरसामर्थ्येन विबुधपतिमपि विस्मापयाञ्चकार ॥ एवमेव निशि नीतायां निखिलायाम् ॥ २० ॥

कार्ष्णौ क्रुधैव दितिजैस्सह युध्यमाने
सन्ध्यामुपास्य सुरसिन्धुजले जयन्तः ।
तत्राजगाम निजकर्मणि तं निधाय
सोऽप्येवमेव विदधे यदुवीरसूनुः ॥ ९३ ॥

कृष्णोऽथ तार्क्ष्यमधिरुह्य सुरर्षिवाचा
पार्श्वं ययौ सुरपतेर्द्युमणिर्यथाऽद्रेः ।
दध्मौ च शङ्खममरासुरहर्षशोक-
संवर्धनं निजकराम्बुजराजहंसम् ॥ ९४ ॥

तदनु तदनुज्ञया रौक्मिणेयः खगपतिस्कन्धमधिरुह्य वज्रनाभेन सह विरचितगदाविग्रहस्तस्मै निजसमरचातुर्यमत्यर्थं प्रकाशयन् तत्कृतगदाघातप्रचलितचेतनतया सुभृशमापन्नस्तत्समयसमुदञ्चितेन शार्ङ्गधरशङ्खरवामृतेन पुनः प्रकृतिमापन्नस्तन्नियोगेन सपदि निजकरमुपगतवता चक्रेण तदसुरपतिशिरस्सञ्चकर्त ॥ १२ ॥

निहते वज्रनाभे तु सुनाभमवधीद्गदः ।
निकुम्भस्तु तदा प्राप षट्पुरं नृहरेर्भयात् ॥ ९५ ॥

अथ महेन्द्रोऽपि केशवेन सह संमन्त्र्य तद्राज्यं तद्गतानि नगराणि धनमणिविविधवस्तुवाहनादीन्यपि चतुर्धा विभज्य, तत्र प्रथममंशं विजयाय जयन्तात्मजाय, द्वितीयं तु प्रभावते प्रद्युम्नपुत्राय, तृतीयं पुनर्गुणवते साम्बसुताय, चतुर्थं चन्द्रप्रभाय गदनन्दनाय च दत्वा, तेषां सर्वेषामपि दिवि गम-

नागमनशक्तिं सर्वभूतावध्यत्वं च वरं प्रदाय, तद्रक्षणाय वज्रपुरे पुनर्जयन्तमभिषिच्य तेभ्यो राजभ्यः पुनर्दिव्यानैरावणकुलसमुद्भवान्नागानुच्चैश्श्रवस्सन्ततिसम्भूतानश्वान् प्रदातुमप्याज्ञापयन् प्रमुदितहृदयः सुरैस्सह स्वपुरीमुपजगाम ॥

अथ कृष्णोऽपि द्वारकामुपगतोऽभूत् ॥ २३ ॥

अथ सुरपतिगीर्भिर्बोधितो विश्वकर्मा
व्यरचयदिव नूत्नां द्वारकां स्वप्रयत्नैः ।
सततमपि यथैषा प्रेक्षणीया सुरैः स्यात्
दशशतमुखवाग्भिर्वर्णनीयाऽतियत्नैः ॥ ५६ ॥

तामुपेत्य हरिस्तत्र यथावदभिपूजितः ।
वृष्णिवीरैस्सभां प्राप दिवं चन्द्र इवोडुभिः ॥ ५७ ॥

त्रिदशनगरतोऽगात्तां च देवर्षिवर्यः
स सपदि यदुवीरैः पूजितोऽभूद्यथार्हम् ।
अकथयदथ रम्यं व्यासक्लृप्तं पुराणं
सदसि हरिचरित्रं प्रार्थितो ह्याहुकेन ॥ ५८ ॥

भवदवशिखितप्तान् भक्तबर्हिप्रबर्हान्
हरिचरितसुधाभिर्हर्षयन्नेवमन्याम् ।
दिशमपि स विधातुं दिव्यतो निर्गतोऽभू-
त्कुवलयहितकाङ्क्षी कोऽपि देवर्षिमेघः ॥ ५९ ॥

अथ पुरि महिषीणामन्यसीमन्तिनीना-
मपि बत सुतसङ्घैस्तत्सतीपुत्रसङ्घैः ।
निजगृहमतिपूर्णं वीक्ष्य विश्वम्भरोऽसा-
वतिमुदमुपयातस्स्वस्य सिद्धां विशुद्धः ॥ ६० ॥

—* इति हरिवंशचम्पौ सप्तमो विलासः *—

# अष्टमो विलासः ॥

तस्य पुत्रेष्वनेकेषु प्रेमपात्रेषु सत्स्वपि ।
प्रद्युम्न एव परमप्रेमपात्रमभूद्धरेः ॥ १ ॥

यः खलु पुरा भगवतो वासुदेवात् रुक्मिण्यां जातमात्रस्सप्तमदिवस एव निशीथे कालवशमुपजिगमिषता कालशम्बरेण ऋक्षवन्तं नाम निजनगरमुपनीतः पोषणाय निजयुवत्याः मायावत्याः करे सन्निवेशितः हरवरेण विज्ञातभविष्यत्कार्यया असुरमोहनाय मायाप्रतिच्छन्ननिजरतिरूपया तया च कान्तधिया धात्र्याः करेण परमरसायनप्रयोगेण सत्वरं संवर्धितः सकलशस्त्रास्त्रविद्यामर्मसु विविधमायारहस्येषु च नितान्तं सम्प्रवेशितः सम्प्राप्तयौवने स्वस्मिन्निजतरुणीविलासमुल्लासयन्त्यास्तस्याश्चरितं प्रति विशङ्कितस्तन्निरूपितनिजागननप्रकारनिश्चयं स्वयमशरीरवाण्याऽपि विबुध्य गिरिशिखरमिव समुन्नतं निजरिपुगृहतोरणसङ्गतं सिंहध्वजं विध्वंसयन् तत्कार्यमसहमानेन तेन शम्बरेण महताऽऽडम्बरेण रणाय सम्प्रेषितं तत्पुत्रशतमपि शरैस्संचूर्णयन् सुमनोगणमनोरथानप्सरोगणमनोरथानपि युगपदेव सम्पूरयन् भेरीमृदङ्गादि[illegible]रवभङ्गैरतिभैरवं सेनार्णवं निजाशुगपरम्पराभिर्गगनतलमुत्किरन् तदन्तरसन्दर्शितेषु तत्सचिवेषु चतुर्षु रणभुवि दुर्धरं दुर्धरं विध्वंसिताशरेण शरेण, अ[illegible]नवनमालिनं केतुमालिनं पातितरिपुशिरश्चक्रेण चक्रेण, मृत्योरपि युधि निहन्तारं शक्रहन्तारमपरिमितशक्त्या शक्त्या, सर्वदा सुरनिकरमर्दनं प्रमर्दनं संवर्धितवैरिजनमनोगदया गदया च संहृत्य, शरपरम्पराभि[illegible]ण रोषाद्धृष्टमतस्तस्य विद्विषतः शस्त्रास्त्रपरम्परां स्वस्य शस्त्रास्त्रसमूहैर्निर्भिद्य, माययोपसृष्टं द्रुमवर्षमाग्नेयास्त्रेण, शिलावर्षं वायव्येन च निवार्य, पुनस्तन्मायाबलेन विसृ

ष्टान् सिंहशार्दूलतरक्ष्वादिहिंस्रमृगान् गान्धर्वेण संशमयन्, पुनरपि बहुधा संप्रवृत्तासु तन्मायासु हस्तिमयीं मायां सिंहमय्या तया, सिंहमयीं शरभमय्या, सर्पमयीं सौपर्ण्या च निरस्य, संमोहिनीमपि संज्ञास्त्रेण प्रशमयन्नपारचिन्तापरवशेन तेन प्राणापदि सन्धारितं गिरिजाप्रसादपरिलब्धं कालदण्डमिव सुसंरब्धं शुम्भनिशुम्भयोर्वधेन देवासुरस्तत्कर्णयोः कीर्णमुद्गरं कमपि मुद्गरं निरीक्ष्य, पुरन्दरगिरा तत्क्षणमवनिमुपगतात् नारदात् देवीस्तवमात्मनः पूर्वस्मृतिं चाभेद्यतनुत्रवैष्णवास्त्रे च संप्राप्य, सपदि निजसंस्तवसन्तोषितायाः पार्वत्याः प्रसादबलेन निजगलपुष्करमालायिते तस्मिन्मुद्गरे सशपथमुत्सृष्टेन वैष्णवास्त्रेण शम्बरममुं निहत्य, विबुधपतिमतीव हर्षयन् विजयतौर्यत्रिकेन सह वियच्चरचरकरकमलविसृष्टैस्सुरद्रुमकुसुमसमूहैरभ्यर्चितस्तत्क्षणएव तत्पुराद्गगनपथेनैव निर्गत्य मायावत्या सह पुनः केशवान्तःपुरे प्रपतितोऽभूत् ॥ १ ॥

यं वीक्ष्य विस्मयरसेन भयेन जुष्ट-
मन्तःपुरं ह्यभवदत्र समेत्य कृष्णः ।
व्याख्याय नारदगिरं सकलत्रमेव
प्रत्यग्रहीत्सपदि शम्बरशत्रुमेनम् ॥ २ ॥

यस्मै ददौ स्तवमनुत्तममात्मरक्षा-
सिद्ध्यर्थमाशु निखिलश्रुतिसारभूतम् ।
सङ्कर्षणोऽखिलचराचरसारवेदी
जप्त्वा तमात्तविजयो युधि यश्च नित्यम् ॥ ३ ॥

अथ कदाचिन्नागसाह्वयपुरे दुर्योधनस्याध्वरे सङ्गताः पाण्डवप्रमुखसकलभूपालाः अनिमिषैकभोग्यां तादृशीं माधवश्रियं श्रुतीनामिव दृशामपि गोचरयितुं सञ्जातकुतूहलाः दूतमुखैर्विरचितविचित्रसन्धानाः धार्तराष्ट्रैस्सह

कुशस्थलीमासाद्य रैवतकगिरिमभितः पश्चिमोदधेरनेकान् प्रतिनिधीन् सृजन्त इव निविष्टसेना बभूवुः ॥ २ ॥

अथ केशवोऽपि सकलयादवैस्सह निजनगरान्निर्गत्य रैवतकोद्यानमण्डलीमिलितनृपतिमण्डलीमध्यगतं मेरुशिखरमिव महोन्नतं निजमणिसिंहासनमलङ्कुर्वाणः विकचकमलषण्डमण्डलोदञ्चन्मार्ताण्डमण्डलश्रियमनुकुर्वाणस्तत्र यथोचितं प्रापितकुशलानुयोगसत्कारैर्यादवगणेन सह समधिगतविचित्रकथाप्रसक्तिभिरखिलराजभिरभितस्समावृतः महर्षिगणेन सह कृतसुकृतविचारैस्सुरनिकरैः परिवेष्टितः परमेष्ठीव परमशोभत ॥ ३ ॥

तत्राजगाम सहसेन्द्रसखो महात्मा
देवर्षिरभ्रपटलावृतमन्तरिक्षम् ।
निर्भिद्य निस्तुलजटामकुटप्रभाभिः
विद्योतयन्नृपसभं स्वकरात्तवीणः ॥ ४ ॥

त्वमाश्चर्योऽसि धन्योऽसि कृष्णेत्युक्तस्सुरर्षिणा ।
हरिस्सपदि तं प्राह दक्षिणाभिस्सहोमिति ॥ ५ ॥

एतदाकर्ण्य पर्याप्तवाक्यतया सम्प्रस्थितं सुरमुनिमवलोक्य तद्विजिज्ञासुभिर्नृपतिभिरर्थितो भगवान्नारायणस्तद्विवरणाय तमेव मुनिमासने निवेशयत् ॥ ६ ॥

सोऽप्येवमकथयत्—भोभो! भूपतयः! श्रूयतां यथाहममुष्य प्रश्नस्य पारमासादितवान् तथाविधं वचनं; एकदा त्रिषवणातिथिरहं गङ्गाम्भसि गिरिसंनिभं महाकूर्ममवलोक्य त्वमाश्चर्योऽसि धन्योऽसीति यदवादिषं, तस्य कूर्मः प्रत्याह, तत्ताक्त्माद्दशनानाग्रहाणामाश्रयभूतायाः गङ्गाया एव न ममेति।

तदनु गङ्गां चेदमब्रवम्; साऽप्याह, तदेतन्मादृशीनामनेकसरितामाश्रयभूतस्य महोदधेरेव न ममेति। अथ महोदधिमुपेत्य तदिदमवादिषम्; सोऽप्याह, तत्तावन्मदाश्रयभूताया मह्या एव न ममेति। ततश्च महीमुपगम्येदमवदम्; सा चाह, तदेतन्मदाश्रयभूतानां भूधराणामेव न ममेति। तदनु तानपि भूधरानुपेत्य एतदवोचम्; तेऽप्याहुः, तत्तावदस्मादृशनिखिलजगत्स्रष्टुर्ब्रह्मण एव नास्माकमिति। ततो ब्रह्माणमुपेत्य तदिदमब्रवम्, सोऽप्याह, तत्तावद्यन्मयाहं तेषां वेदानामेव न ममेति। अथ वेदानुपेत्य तदिदमवादिषम्; तेऽपि वेदाः तत्तावद्यदर्थमुपसृष्टा ब्रह्मणा वयं तेषां यज्ञानामेव नास्माकमिति जगदुः। अथ यज्ञानहमिदमवादिषम्; तेऽप्याहुस्तत्तावद्यद्गतिका वयं यद्दत्तं हविरादिकमश्नीमस्तस्य विष्णोरेव नास्माकमिति। अथ तमिममुपगम्येदमवादिषम्; सचाह भवतां शृण्वतामेव, तत्तावद्दक्षिणाभिस्सहोमिति। अतस्सकलयज्ञानां विष्णुरेव सदक्षिणो गतिरिति समाप्तवाक्यतया प्रस्थितोऽस्मीति ॥ ५ ॥

एवमुक्त्वा गते स्वर्गं नारदे पृथिवीक्षितः।
कृष्णमामन्त्र्य निर्याताः स्वंस्वं राष्ट्रं मुदाऽन्विताः ॥ ६ ॥

नृहरिरथ कदाचित्प्राविशद्यज्ञदीक्षां
द्विजमणिरिह कश्चित्पाहिपाहीति चागात्।
अभयमपि च दत्तं देवदेवेन तस्मै
असुकरमितरैर्यत्तद्द्विजः कार्यमाह ॥ ७ ॥

तत्कार्यं त्रीण्यपत्यानि प्रजातानि हृतानि मे।
पत्न्याः प्रसवकालेऽद्य चतुर्थं त्रायतामिति ॥ ८ ॥

एतदाकर्ण्य विचिन्तयति भगवति वासुदेवे ॥ ९ ॥

तत्कार्यं कियदद्य यामि सहसा रक्षामि विप्रात्मजं
मा भैषीर्द्विजपुङ्गवेति गदिते भीमस्सुनो वैभवात् ।
विप्रः प्राह तदेतदच्युतमृते केनापि नैव क्षमं
नैनं प्रेषय कृष्ण सोऽद्य विपुलभ्रान्तो वृथा गर्जति ॥ ९ ॥

इति गिरमतितीव्रां विप्रगाण्डीविनोस्तां
श्रुतिपुटमुपयातां स्थैर्यधैर्योपजाताम् ।
अधरपुटनटद्भिस्स्मितैरेव रुन्धन्
स्वबलमबलपुत्रं प्राहिणोत्सार्जुनं द्राक् ॥ १० ॥

ततः—

द्विजगृहमवबुद्धं तेन पार्थेन वेगा-
त्प्रतिदिशमुपरुद्धं सैन्यशस्त्रास्त्रजालैः ।
तदपि वियति नीतं यत्प्रसूतं निशीथे
दृशि न पतितमेतन्निश्चितं हेति शब्दैः ॥ ११ ॥

एवं विप्रसुतस्यार्थे मोघीकृतपराक्रमः ।
फल्गुनः कृष्णमासाद्य लज्जयाऽवनतोऽभवत् ॥ १२ ॥

क्षितिसुरखरगीर्भिर्दारितः खिन्नरूपः
सुरपरिवृढसूनुर्वैष्णवीं प्राप्य विद्याम् ।
दिवि भुवि च विचिन्वन् दिक्पतीनां पुरीषु
द्विजसुतमविदित्वा सोऽग्निमैच्छत्प्रवेष्टुम् ॥ १३ ॥

अथ भगवान् वासुदेवः कथमपि संनिवारितवासवात्मजवह्निप्रवेशः सान्त्व-
वचनसन्निरुद्ध पुत्र वियोगविह्वलविप्रवरशोकावेशः निजनियोगेन दारुकेण धुरि
संप्रवेशितं शैब्यसुग्रीवमेघपुष्पबलाहकाख्यैश्चतुर्भिरश्वैः युयोजित रथम् उच्छ्रित-

तार्क्ष्यध्वजोपशोभितं निजरथमत्यद्भुतं द्विजेन सह सत्वरमधिरूढः केवलमात्मश्रियोपगूढः कशाग्रचलननियमनीयरथ्ये सारथ्ये सन्निवेशितश्वेतवाहनः उदीचीं प्रति समुत्सृष्टरथवाहनः समतीतसकलवनगिरिसरिद्दुर्गदुर्गमाखिलमहीपारः प्रापिताकूपारः स्मृतिमात्रेण ससम्भ्रममुपस्थितैस्तत्तज्जलधिपर्वतैर्निश्शङ्कं प्रदत्तरथसरणितया अतिक्रान्तसप्तद्वीपाकूपारकुलगिरिचक्रवालः निजकरचक्रेण पथि संप्रवृत्तं तमश्चक्रमुत्कृत्य रथाश्वेभ्यः सन्दर्शितगगनान्तरालः झडिति तत्तमसः पारमासाद्य तत्र प्रज्वलितं किमपि तेजोमण्डलं स्वयमेव प्रविश्य द्विजकुमारांश्चतुरस्सङ्गृह्य ततः प्रतिनिवृत्तः तान् सुतान् स्वरथमारोपयन् साधितार्थौ तद्विजपार्थौ हर्षवार्धौ निमज्जयन् क्षणेन पुनस्तेनैव पथा यथापुरं स्वपुरमुपगतोऽभूत् ॥ ७ ॥

हरिः पुत्रैर्युतं विप्रं भोजयित्वा यथेप्सितम् ।
धनेन तर्पयित्वा च ग्रहं प्रास्थापयत्तदा ॥ १४ ॥

सर्वानुपैति पुरुषार्थचतुष्टयेऽन्त्य-
मिच्छन् पुमानिति निजानवबोधयन्नु ।
शङ्केऽहमन्त्यसुतमर्थयते द्विजाय
शौरिर्ददौ दिवि हतांश्चतुरोऽपि पुत्रान् ॥ १५ ॥

ततः—

क्षणेन महतोऽध्वनो गतिविनिर्गतीं भूभृतां
नतिः प्रवणतोदधेरपि महस्तमस्सान्द्रता ।
किमद्भुतमिदं वदेत्यजमपृच्छदेषोऽर्जुनः
स चाह सकलं हरिस्सुहृदि शृण्वति प्रश्रयात् ॥ १६ ॥

—* इति श्री हरिवंशचम्पौ अष्टमो विलासः *—

# नवमो विलासः ॥



तदैव शोणितपुरे बाणो नाम महासुरः ।
ज्येष्ठपुत्रो बलेरासीद्बली बाहुसहस्रवान् ॥ १ ॥

यस्तूग्रमुग्रतपसा परितोष्य तस्मा-
द्दाक्षायणीतनुजतां च गुहाततां च ।
बर्हिध्वजं शरवणेऽग्निजजन्मभूमौ
रम्येऽत्र शोणितपुरे वसतिं च लेभे ॥ २ ॥

देवेन तेन पुरि सन्निहितेन गुप्तो
योऽसौ युधि प्रचुरवीर्यमदेन सिक्तः ।
गन्धर्वयक्षपतगोरगसिद्धसाध्यान्
जित्वा मुहुर्मुहुरहो विरतिं न लेभे ॥ ३ ॥

स हि समरमलब्ध्वा क्वापि कण्डूलबाहुः
स्मरहरमुपगम्य प्राह मद्बाहुपङ्क्तेः ।
भवति यदनुरूपं तत्सुयुद्धं मम स्या-
द्यदि जनिरमुधेति प्राहसत्सोऽपि शम्भुः ॥ ४ ॥

स च सुतमिदमूचे प्राप्स्यसे युद्धमेवं
निपतति भुवि भग्नं यर्हि बर्हिध्वजं ते ।
तमथ करसहस्रेणार्चयन्निर्गतोऽभू-
त्समरसमयमेतं काङ्क्षमाणोऽतिहृष्टः ॥ ५ ॥

अथ बाणः पुरं प्राप्य पश्यन् कुम्भाण्डमग्रतः ।
प्रियमावेदयिष्यामीत्यब्रवीत्सचिवं मुदा ॥ ६ ॥

अथ सचिवोऽपि तथैवं प्रत्यवादीत् ॥ १ ॥

बलिः किमवमुच्यते शतमखोऽथवा बध्यते
द्युराज्यमुत भुज्यते किमु हरेर्भयं त्यज्यते ।
कमद्य वरमाप्तवानसि हराद्गुहाद्वा विभो
कुतस्तव मुखाम्बुजे रमति हर्षजाश्रुस्रवः ॥ ७ ॥

इति कुम्भाण्डवचनमाकर्ण्य समरायतिम् ।
बाणे ब्रुवाणे न्यपतच्छक्राशनिहतो ध्वजः ॥ ८ ॥

ध्वजस्य पातं दृष्ट्वा ता वप्युत्पातशतं भयात् ।
धैर्याच्च खेदमोदाभ्यां संयुतौ जोपमूषतुः ॥ ९ ॥

अथैकदा तत्पुरपरिसरे परिसरन्त्याः पुण्यस्रवन्त्याः तटभुवि सम्प्रतिष्ठितासु सर्वर्तुसमुदयसमुज्ज्वलासु मधुकरनिकरझङ्काररवमुखरिताशामुखासु शुकपिकप्रमुखरुचिरखगकुलसंचाररमणीयवीथिकासु विचित्रोपवनवाटिकासु अम्बरचरकरकल्पितैः कल्पद्रुमकुसुमसम्पातैस्सर्वतस्सञ्जातैः वेणुवीणादिविविधवाद्यरवातिहृद्यदिव्याप्सरोगणगीतजातैस्सह सम्प्रवृत्ते शशधरचूडक्रीडाविहारे तत्पार्षद्गणैस्सह यथारुचि विहरमाणेष्वप्सरोगणेषु पत्या सह वनभुवि विरचितविचित्रकामविहारा हैमवती स्वसविधवर्तिनीं मनसि पत्या सह रतिमुत्कण्ठितवतीमुषानाम्नीं बाणकन्यां सत्वरं सदयमिदमवादीत् ॥ २ ॥

स्फुरति मनसि यत्ते बाणकन्येऽद्य धन्ये
झडिति भवति तत्त्वां पुष्पकाले निशान्ते ।

अनुभवति हठाद्यः स्वप्नदृष्टो भवत्याः
स भवति पतिरार्ये काऽस्ति धन्या त्वदन्या ॥ १० ॥

इति गिरिवरपुत्रीवाक्यमम्भोजगात्री
कुवलयदलनेत्री दानवेन्द्रस्य पुत्री ।
अतुलितगुणजाता सा सखीभिः प्रणीता
निजसदनमभीता विस्मृतार्याप्रगीता ॥ ११ ॥

हरितिथिरिति योऽभून्माधवे मासि तस्मिन्
निजरुचिरनिशान्ते सा निशान्ते प्रसुप्ता ।
असदृशगुणशीला स्वप्नलब्धेन पुंसा
ह्यतिदृढमुपभुक्ता रक्तसिक्ता बभूव ॥ १२ ॥

ततः प्रबुद्धाऽपि साऽसृङ्क्लिन्नपरिधानतया चकितमतिः किमिदमिति सखीभिस्सह विचिन्तयन्ती स्वप्नलब्धमदो न गोपायेति ताभिर्निगदिताऽपि निजकुलशौशील्यमाख्याय स्वचरितमतीव गर्हयन्ती स्वप्राणानपि समुत्स्रष्टुमभिलषन्ती ततस्सख्या शनैश्शनैस्स्मारितमृडानीवचनतया स्वात्मानमात्मनैव मुहुर्मुहुराश्वासयन्ती सखीं प्रति तदानयनोपायमर्थयन्ती स्वप्नसङ्गतस्य तस्य चानयनमज्ञाततत्कुलनाममिरसाध्यमिति कुम्भाण्डदुहितृगिरा ब्रह्माण्डगतसकलसुरासुरनरवरयुवरूपचित्रलेखनाय चित्ररेखां वराप्सरसमन्वयुङ्क्त ॥ ३ ॥

साऽप्यनतिचिरमेव तथा चकार ॥ ४ ॥

तस्याश्चित्रपदे क्रमादुपगतं दृष्ट्वाऽनिरुद्धं ह्युषा
हर्षोत्फुल्लविलोचनाऽभवदसौ कान्तो ममेत्याह च ।

पृष्टा प्राह कुलं च नाम च यशस्तस्याप्सरास्सादरं
चौर्यादानयनं स्वसाध्यमिति च व्यक्तं तदा त्र्यक्षरम् ॥ १३॥

तदनु दनुजकन्या प्रार्थयन्ती नितान्तं
शरणमुपगता त्वां प्राणदात्री भवेति ।
धनुरिव भुवि नम्रा चित्ररेखाङ्घ्रिमूले
वियति जलदमूले चन्द्ररेखेव साऽभूत् ॥ १४ ॥

तदनु तत्प्रार्थनासमुदयसमुद्धृया सैषा चित्रलेखा सखीमध्यात्सपदि समुत्थाय निजयोगविद्यया वियति विद्युल्लतेवान्तर्हिता सती अतुलितमनोजवेन मुहूर्तत्रयमात्रेण सम्प्राप्तद्वारकानगरद्वारदेशा तत्र स्मरणमात्रसन्निहितेन देवर्षिणा प्रदत्तां प्रकृतोपयोगिनीं कामपि तामसीं विद्यामासाद्य विरचिततत्पुरप्रवेशा तत्र क्वचन विचित्रभवनान्तरे नृत्तगीतप्रसक्तैः योषासहस्रैः निरुद्धमप्यनिरुद्धं गगनान्तरे तारागहस्रैः परिवृतं कुमुद्वतीसखमिव स्वप्नसङ्गतायामुषायामेव सन्निहितमनोरथं तमवलोक्य देवर्षिविद्यया संमोहितसकलयोषायुता सल्लापेन विदिततन्मनोरथा सद्य एव तमोन्तर्हितमेनमादाय यथागतमतीव वेगेन रुधिरपुरं पुनः प्रविश्य सकलसखीसमक्षमुषाहर्म्यमुपनिनाय ॥ ५ ॥

सैषा निरीक्ष्य हृदयादिव भूच्युतं तं
कन्दर्पकोटिसदृशं रतिकोटिरम्या ।
मोदाम्बुधौ मधुलवायितमानसाऽभू-
त्सोऽप्येवमेव तदहो घटना मृडान्याः ॥ १५ ॥

ततो गान्धर्वविधिना सङ्गतौ रतिसम्मतौ ।
उषानिरुद्धौ तत्रोभौ रमेते स्म यथासुखम् ॥ १६ ॥

तदनु तत्पुररक्षिभिर्दानवेशावेदितकन्यान्तःपुरोदन्तो दुष्टदन्तः कुलाधमानात्सञ्चलितप्राणो बाणः तत्क्षणमेव किङ्करान्नाम निजान्तिकवर्तिनो दानवान्निजविद्विषः प्राचुर्यैः निग्रहाय प्राहिणोत् ॥ ६ ॥

तेऽपि गदामुसलपट्टिसाद्यायुधपाणयो दानवाः उषाहर्म्यमभितस्तमरिं न्यरुन्धन् ॥ ७ ॥

तदाऽनिरुद्धोऽपि तत्कलकलैस्सम्प्रबुद्धस्सिंह इव सुसंक्रुद्धः निजनिधनशङ्कया वेपथुमतीं स्वमतीं समाश्वास्य गिरिकन्दरादिव तद्गृहान्तराद्बहिर्निर्गतो रणभुवि मृगैरिव तत्किङ्करैस्समानिरुद्धोऽभूत् ॥ ८ ॥

तदा समरसम्भीता चित्ररेखाऽप्युपासखी ।
सस्मार नारदमुनिं सोऽभ्येत्य खगतोऽभवत् ॥ १७ ॥

अथ दितिसुतमुक्तैरायुधैस्ताडितोऽलं
सुरमुनिमतिवेलं तोषयंस्तूर्णमाजौ ।
परिघमतुलवेगं पातयन् सोऽनिरुद्धो
मरुदिव जलदौघान् द्रावयामास दैत्यान् ॥ १८ ॥

अथ समरनिवृत्तान् किङ्करान् भर्त्सयंस्तान्
स्वकमपरमनीकं प्राहिणोद्दानवेन्द्रः ।
तदपि बहुलमेको द्रावयामास वेगा-
त्स युधि तदपि दृष्ट्वा नारदः खे ननर्त ॥ १९ ॥

तदनु दशशताश्वैर्योजिते स्यन्दने स्वे
विपुलभुजसहस्रद्योतिनानायुधेऽस्मिन् ।
स्फुरति समरभूमिं प्राप्य बाणे ययुर्द्राक्
कुतुकभयरुषस्तान्नारदोषानिरुद्धान् ॥ २० ॥

असुरशरसहस्रैरर्दितस्सोऽनिरुद्धः
स्वयमपि शरजालैरर्दयामास बाणम् ।
मुहुरपि च रथेषामच्छिनत्तस्य रोषा-
त्तमसिमुसलशूलैश्छादयामास दैत्यः ॥ २१ ॥

स झडिति रथपार्श्वे यादवस्सम्प्लुतोऽभू-
दसुरपतिरमुञ्चद् घोरशक्तिं तदाऽस्मै ।
चटुलगतिरमोघां मोघयन् कार्ष्णिसूनुः
व्यसृजदयममुष्मै तां गृहीत्वा जवेन ॥ २२ ॥

तदा बलिसुतश्शक्त्या विद्धः प्राद्युम्निना रणे ।
रथयष्टिमवष्टभ्य मुमोह बुबुधे पुनः ॥ २३ ॥

अथ कुम्भाण्डवचसा मायामाश्रित्य दानवीम् ।
बबन्ध नागपाशेन बाणः प्राद्युम्निमञ्जसा ॥ २४ ॥

तदनु मायाभुजगनियमितविग्रहस्य तस्य प्राद्युम्नेर्जिघांसया करकलित-कृपाणं बाणमवलोक्य तत्सारथिरसौ कुम्भाण्डस्सविनयमिदमभाषत ॥ ९ ॥

सुविदितकुलनामा शिक्षणीयोऽर्हणीयः
स भवतु तव तावद्रक्षणीयो मतो मे ।
बतबत यदि नैवं प्राप्तलोकापवादा
वद तव दुहितेयं कुत्र देया क्व नेया ॥ २५

इति ब्रुवति कुम्भाण्डे तं त्यक्त्वा रक्षिणां वशे ।
बाणस्स्वसदनं प्रायान्नारदः कृष्णसन्निधिम् ॥ २६ ॥

ततः स्तवेन सन्तुष्टा दुर्गा स्थित्वा हि बन्धने ।
ररक्ष रतिपुत्रं तं ह्युषाऽप्येनमसान्त्वयत् ॥ २७ ॥

अनिरुद्धे हृते तस्मिन् द्वारकायां तु तद्गृहे ।
मोहात्प्रबुद्धास्तद्योषास्तमदृष्ट्वा व्यचिन्तयन् ॥ २८ ॥

अहह निशि निशाटैः खे विनीतो विनीतो
मुरहरवरपौत्रस्सोऽनिरुद्धो निरुद्धः ।
इति हि रुदितमासीत्तन्निशान्ते निशान्ते
तदथ विदितमासीद् द्वारवत्याऽस्ववत्या ॥ २९ ॥

दिशिदिशि वनशैलश्वभ्रवापीतटाकान्
प्रतिसरणि रटन्तः पर्यटन्तोऽनिरुद्धम् ।
अगणिततनुखेदा यादवा मार्गमाणा
मनसि कलुषमापुःक्वापि नप्रेक्षमाणाः ॥ ३० ॥

तदा जगाद सेनानी रनाधृष्टिरिदं वचः ।
हरिं हरिहयस्यैतत्कृत्यमित्यथ सोऽब्रवीत् ॥ ३१ ॥

नहिनहि शतमन्योः कृत्यमेतत्सुबुद्धेः
मयि निहितजयोऽसौ मत्परा एव देवाः ।
त्वमिह वदसि बाल्याद्विग्धियं ते प्रसुप्तां
ध्रुवमसुरकुलोत्थं पुंश्चलीकृत्यमेतत् ॥ ३२ ॥

एतदाकर्ण्य कृष्णस्य भाषितं परमाद्भुतम् ।
अक्रूरः प्राह तं देवा न क्षुद्रा इति माधवम् ॥ ३३ ॥

**—* इति हरिवंशचम्पौ नवमो विलासः *—**



# दशमो विलासः ॥

अथ हरिसदनोत्थैः पुण्यवादित्रघोषैः
पुलकित इव भासा जृम्भमाणे रवौ खे ।
हृदि गतमपनेतुं द्रागलीकं यदूनां
सुरमुनिरपि शौरेः प्रादुरासीत्पुरस्तात् ॥ १ ॥

अथ नारदमुखादाकर्णितनिजपौत्रवृत्तान्तो भगवान्नारायणः स्मरणमात्रेण पुरतोऽवतीर्णं सुपर्णं संमान्य तस्मै सादरमावेदितशोणितपुरप्रयाणः सुमेरोरिव समुन्नतस्य भक्त्यतिशयेन संनतस्य सर्वाभरणभूषितस्य तस्य स्कन्धदेशमतिरयेण प्रलम्बरिपुशम्बरारिभ्यां सह खड्गचर्मारिदरगदाशार्ङ्गादिशोभितपार्श्वद्वयः स्वयमलङ्कुर्वाणः राकेन्दुकविसहस्रसंयुतस्य सूर्यायुतस्य शोभां बिभ्राणः दिवि भुवि च सपदि समुन्मिषद्भिर्विविधवादित्रनिस्वनैर्बन्दिमागधजनजयसंस्तवस्वनैरपि दिग्दन्तिनामभयमाचक्षाणः अहमहमिकया सङ्गतैरखिलभोजवृष्ण्यन्धकैर्निखिलवृन्दारकैरपि सस्पृहं वीक्ष्यमाणः मुहुर्मुहुर्गन्धचूर्णैर्लाजैरप्यवकीर्यमाणः स्वानुज्ञया सासत्रगिरिजलधिविक्षोभं वियत्तलमुत्पतता निजगरुद्वातेन गगनचरघनविमानावलीर्दिक्तटीघटितविचित्रतरसोपानावलीः कलयता तारासरणिसञ्चरत्त्रिकूटशोभामुद्वहता गरुत्मताऽतिक्रान्तैकादशसहस्रयोजनपथः बाणनगररक्षणाय तत्पुरमभितस्संज्वलतोऽग्नेराहवनीयस्य तेजसा सन्निरुद्धो बभूव ॥ १ ॥

तार्क्ष्योऽथ कृष्णवचसा धृतकामरूपः
खं संप्रविश्य निजवक्त्रसहस्रनीतैः ।
सिञ्चन्मुहुर्मुहुरनन्तधुनीजलौघै-
रग्निं प्रशान्तमतनोत्तमनन्तशक्तिः ॥ २ ॥

ततः पुनरपि यथापुरमन्तरिक्षपथमनुसरति गरुत्मति पथि रणाय सङ्गतेषु रुद्रानुचरेषु केषु चिदग्निषु निजशरप्रहतोरसमङ्गिरसं विलोक्य पलायमानेषु सुरर्षिसन्दर्शितानि स्मरहरक्रीडास्थानानि विलोकयन्नेव रुधिरपुरमभिगच्छन् स्वशङ्खमधरपुटमारोपयन्निशाकरमुद्गिरन् वातोद्धूतो जलद इव गगनतलमतीव शोभयन् जलजमिममापूरयन् तद्रवैर्निजधुरि विचित्रायुधैर्विद्योतमानमखिलमखिलमाकुलीचकार ॥ २ ॥

तदा समरदुर्दिने नृहरिदानवानीकयो-
स्ततैर्हरिसुताशुगैर्वियति तोयधारायितम् ।
बलस्य मुसलेन च प्रपतताऽन्तरोल्कायितं
स्रुतैरसुरशोणितैर्भुवि जलप्रवाहायितम् ॥ ३ ॥

हलमुसलनिपातैस्तत्र नीलाम्बरस्य
क्षिरमनकुलशत्रोः पक्षतुण्डप्रवातैः ।
हरिसुरशरवातैश्चक्रपातैरजस्य
ह्यसुरबलमशेषं ध्वस्तमासीत्तदानीम् ॥ ४ ॥

अथ बलमभिगच्छन् द्रागज्वरा त्र्यष्टरामा
भसितनिशितहेतिर्जृम्भमाणोऽरुणाक्षः ।
सुचिररचितयुद्धस्तेन तद्गात्रयष्टिं
ह्यविशदथ बलोऽभूद्भग्नशक्तिः क्षणेन ॥ ५ ॥

हरिरथ बलमुच्चैः क्रन्दमानं दिदृक्षुः
स्वयमपि स यदागात्तद्दशामेव तूर्णम् ।
ज्वरमपरमजोऽसौ वैष्णवं द्रागसर्ज
क्षुभिततनुरनेन त्र्यम्बकस्य ज्वरोऽभूत् ॥ ६ ॥

हरिरपि स तमोग्रं पाहिमाहीति पादौ
शरणमुपगतं द्राङ् मोचयन्नार्तिसिन्धोः ।

ज्वरमुपशमयन् स्वं श्रैष्ठ्यमस्मै मुदाऽदा-
द्वरमपि बहुरूपैः स्थावरादीन् प्रवेष्टुम् ॥ ७ ॥

अथ दृशि बहुशोणं बाणमादाय रुद्रे
प्रमथगणसमुद्रे कार्तिकेयेन साकम् ।
मुरहरमुपयाते शैलशस्त्रास्त्रवर्षी
पुनरपि सुरसङ्घैः प्रेक्ष्यमाणो रणोऽभूत् ॥ ८ ॥

हरिहरवरयुद्धे भूरिभारानता भूः
द्रुहिणमुपगताऽभूद्रक्षणार्थं स तस्याः ।
स्मरहरमिदमूचे तेऽद्य कृष्णेन युद्धं
न हितमिति ततस्तौ त्यक्तयुद्धावभूताम् ॥ ९ ॥

क्वचिदथ विधिना तौ स्वप्रदृष्टावभिन्नौ
मुहुरिह मुनिवृन्दैस्संस्तुतौ नामभिस्स्वैः ।
बत निमिषमभूतां नित्यमन्योन्यमिन्ना
वपि सकलमुनीनामात्मदृष्टेरभिन्नौ ॥ १० ॥

अथ गुहोऽपि नानाविधप्रहरणैः प्रमथगणैः परिवृतः रणभुवि तार्क्ष्य-ध्वजमुपगतः तस्मिन्निजशस्त्रास्त्रपरम्परामुत्सृजन् तस्यां हरिशरपरम्परया व्यर्थायां महोग्रं ब्रह्मशिरोभिधमस्त्रं प्रयुञ्जानः तस्मिन्नपि चक्रतेजसा प्रशमिते स्वकीयाममोघां शक्तिं प्रमुञ्चन् तस्यामपि हरिणा हुङ्कारेणैव निरस्तायां निजसुतवधोद्यतं चक्रमुद्वीक्ष्य दाक्षायण्या प्रहितया लम्बानाम्न्या कोटव्या कृष्णसंमुखादपवाहितोऽभूत् ॥ ३ ॥

अथ बाणोऽपि स्वरथमारुह्य भेरीप्रमुखविविधवादित्ररवेण सर्वतश्चलितं निजबलजलधिमलङ्कुर्वाणः खगपतिमारुह्य रणायाभियान्तं नृहरिमासाद्य सहस्रबाहुना मया समरमष्टबाहोस्तव न क्षममिति बहुशः स्वशौर्यमेवासकृद्ब्रुवा

णः निजमर्मभेदिभिस्तत्सायकैरेव रणकर्मणि प्रेर्यमाणः शस्त्रास्त्रवर्षिभिस्स्वबा-
हुभिरेव जृम्भमाणः हरावपि निजशस्त्रास्त्रवर्षैर्वियति ततोऽप्यतिशयेन विजृ-
म्भमाणे स्वस्य समरनैपुण्यं बाहुबाहुल्यं चाप्रयोजकं मन्यमानः प्रासादशिरसि
हर्षातिरेकेण सहासं नृत्यतः समरसाक्षिणो देवर्षेः पारितोषिकं प्रदातुकामेन
कृष्णेन निशिततरशरजालेनापहृतनिजध्वजाश्वच्छत्रमणिमकुटतनुत्राणः तार्क्ष्य-
तुण्डप्रहारविह्वलितवाहनमयूरतया वाहनान्तरमपेक्षमाणः स्मरहरगिरा सपदि
नन्दिनानीतं त्र्यम्बकरथमारुह्य महोग्रं ब्रह्मशिरोऽस्त्रं प्रयुञ्जानः हरिकरसहस्ता-
रतेजसा प्रशमिते तस्मिन् उद्यते च हरिणा पुनस्तद्रिपुवधाय सहस्रार्कसमते-
जसि तस्मिन् चक्रे देवीगिरा पुनरपि हरेः पुरतः प्रवृत्तायाः लम्बायास्तद्-
वनप्रार्थनया प्रमुक्तेनापि तेन सुदर्शनेन परिहृतद्व्यूनसहस्रबाहुः भक्तनिधनश-
ङ्कया महादेवेन गुहेन च संप्रार्थिततया मुकुन्देन तेन कथमपि प्राणैरवियो-
जितः नन्दीश्वरेण शोणिताप्लुत एव स्थाणुसमक्षमानीतः हृतशेषेण भुजद्वये-
नैव साभिनयं विरचितविचित्रनृत्यः सन्तुष्टेन तेन शम्भुना पुनःपुनः सम्प्राप्त
तद्भक्तताजरतामरतादिविविधवरस्सन् विज्वरोऽभूत् ॥ ४ ॥

अथ कृष्णेऽपि नारदगिरा चित्रलेखया च सन्दर्शितं बाणकन्यान्तः-
पुरं प्रविश्य तत्र तार्क्ष्यसन्दर्शनेनैव विगलितेषु विषधरबाधनेषु तदनिरुद्धम-
निरुद्धं प्रशमितमनोरोषामुषां च निजचरणौ वन्दमानौ संप्रेक्ष्य मुहुर्मुहुस्तयो-
र्विहितविविधाशीर्वचनः अभयागताय कुम्भाण्डाय समर्पितनद्राज्यो(?)ऽप-
त्यः तदुपकल्पितैरुद्वाहसम्भारैस्तयोरुषानिरुद्धयोस्तत्रैव निर्वर्तितविवाहोत्सवः
ताभ्यां सवयस्याभ्यां बलप्रद्युम्नाभ्यां च सह सुपर्णमधिरुह्यार्णवोपरि निर्ग-
च्छन् वरुणवशवर्तिबाणगोधनं सत्यामुदे नेतुमात्मनाज्ञप्ते गरुत्मति तदुद्यमं
विज्ञाय तटभुवि सञ्चरत्सु गोव्रजेषु तेषु जलधिं विशत्सु गरुडेऽपि निज-
गरुद्वातेन सन्दर्शितपथमपांनिधिं तं प्रविश्य तद्गोधनं निखिलमपहर्तुमारभ-
माणे सपदि रणाय तत्र सन्नद्धं वारुणं बलमखिलमात्मशरपरम्परया विद्राव-

यन् वरुणमपि निजास्त्रधारिणं सपदि निजवैष्णवास्त्रेण संस्तम्भयन् बाणेन सह जीवन्नमोक्ष्यामि त्वद्बोधनमिति स्वसमयबन्धमाख्याय स्वचरणौ शरणमुपगते स्तुतिरवमुखरितदिङ्मुखे तस्मिन् प्रचेतसि कृपया विहाय तद्बोधनं विहाय-सैव निजैस्सह निजरथेन गरुत्मता शतमखमुखैरखिलबर्हिर्मुखैरनुगत एव म-हर्षेर्गिरमिव नानालङ्कारवतीं द्वारवतीमाससाद ॥ ९ ॥

अथ दिवमुपयाते सर्वदेवैस्सहेन्द्रे
सदसि विशदयंस्तद्बाणयुद्धं यदूनां ।
सुखमरमत कृष्णः पुत्रपौत्रैः परीतो
निजपुरि वसुदेवं तोषयन्नाहुकं च ॥ ११ ॥

उषया च युतस्तत्र रेमे रतिसुतोऽपि सः ।
कुम्भाण्डकसुतां प्राप्य साम्बोऽपि समनन्दत ॥ १२ ॥

एवंविधानि चरितानि हरेर्विचित्रा-
ण्यन्यानि सन्ति शिशुपालवधादिकानि ।
सन्दर्शितान्यपि रणे कुरुपाण्डवानां
तान्यत्र नैव कथितानि पुरा श्रुतानि ॥ १३ ॥

इत्युक्त्वा स पुनः प्राह सूतः कल्पेऽपि पौष्करे ।
वाराहे नारसिंहे च यद्वृत्तं वामनेऽखिलम् ॥ १४ ॥

इति श्री भारद्वाजकुलजलधिचन्द्रेण दासप्पार्यपौत्रेण वेंकप्पार्यपुत्रेण वेंकोबाचार्यशिष्येण वेंकटसूरिणा विरचिते हरिवंशचम्पौ दशमो विलासः ॥

—* समाप्तोऽयं ग्रन्थः *—

अनेन भारतीरमणमुख्यप्राणान्तर्गत कृष्णवेदव्यासात्मक-
श्री श्रीनिवासः प्रियताम्.

—* श्री कृष्णार्पणमस्तु *—